अन्तःपूयेष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि ॥
गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते ।
बालवृद्धासहक्षीणभीरूणां योषितामपि ॥
मर्म्मोपरि च जातेषु रोगेषूक्तञ्च दारणम् ।
सुपक्वे पिण्डिते शोफे पीडनैरवपीडिते ॥
पाकोद्वृत्तेषु दोषेषु तत्तु कार्य्यं विजानता ।
सुपिष्टैर्दारणद्रव्यैर्युक्तैः क्षारेण वा पुनः ॥
कठिनान्स्थूलवृत्तौष्ठान्दीर्य्यमाणान्पुनः पुनः ।
कठिनोत्सन्नमांसांश्च लेखनेनाचरेद्भिषक् ॥
समं लिखेत्सुलिखितं लिखेन्निरवशेषतः ।
वर्त्मनानुप्रमाणेन समं शस्त्रेण निर्लिखेत् ॥
क्षौमं प्लोतं पिचुं फेनं यावशूकं ससैन्धवं ।
कर्क्कशानि च पत्राणि लेखनार्थे प्रदापयेत् ॥
नाडीव्रणान् शल्यगर्भानुन्मार्ग्युत्सङ्गिनः शनैः ।
करीरबालाङ्गुलिभिरेषण्या वेषयेद्भिषक् ॥
नेत्रवर्त्मगुदाभ्यासनाडीऽवक्त्राः सशोणिताः ।
चुचूपोदकजैः श्लक्ष्णैः करीरैरेषयेत्तु ताः ॥
संवृतासंवृतास्येषु व्रणेषु मतिमान् भिषक् ।
यथोक्तमाहरेच्छल्यं प्राप्तोद्धरणलक्षणं ॥
रोगे व्यधनसाध्ये तु यथोद्देशं प्रमाणतः ।
शस्त्रं निदध्याद्दोषञ्च स्रावयेत्कीर्त्तितं यथा ॥

अपाकोपद्रुता ये च मांसस्था विवृतास्च ये।
यथोक्तं सीवनं तेषु कार्य्यं सन्धानमेव च ॥
पूयगर्भानणुद्वारान्व्रणान्मर्म्मगतानपि ।
यथोक्तैः पीडनद्रव्यैः समन्तात्परिपीडयेत् ॥
शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति।
न चाभिमुखमालिम्पेत्तथा दोषः प्रसिच्यते ॥
तैस्तैर्निमित्तैर्बहुधा शोणिते प्रसुते भृशं ।
कार्य्यं यथोक्तं वैद्येन शोणितास्थापनं भवेत् ॥
दाहपाकज्वरवतां व्रणानां पित्तकोपतः ।
रक्तेन चाभिभूतानां कार्य्यं निर्व्वापणं भवेत् ॥
यथोक्तैः शीतलद्रव्यैः चीरपिष्टैर्घृतप्लुतैः ॥
दिह्यादबहलांल्लेपान् सुशीतांश्चावचारयेत् ।
व्रणेषु चीणमांसेषु तनुस्राविष्वपाकिषु ॥
तोदकाठिन्यपारुष्यशूलवेपथुमत्सु च ।
वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा ॥
स्नैहिकेषु च बीजेषु पचेदुत्कारिकां शुभां।
तेषाञ्च स्वेदनं काय्य स्थिराणां वेदनावतां ॥
दुर्गन्धानां क्लेदवतां पिच्छिलानां विशेषतः ।
कषायैः शोधनं कार्य्यं शोधनैः प्रागुदीरितैः ॥
अन्तः शल्यानणुमुखान्गम्भीरान्मांससंश्रितान् ।
शोधनद्रव्ययुक्ताभिर्व्वर्त्तिभिस्तान्यथाक्रमं ॥

पूतिमांसप्रतिच्छन्नान्महादोषांश्च शोधयेत्।
कल्कीकृतैर्यथालाभं वर्त्तिद्रव्यैः पुरोदितैः ॥
पित्तप्रदुष्टान् गम्भीरान्दाहपाकप्रपीडितान्।
कार्पासीफलमिश्रेण जयेच्छोधनसर्पिषा ॥
उत्सन्नमांसानस्निग्धानल्पास्रावान् व्रणांस्तथा।
सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत् ॥
तैलेनाशुध्यमानानां शोधनीयां रसक्रियां।
व्रणानां स्थिरमांसानां कुर्य्याद्द्रव्यैरुदीरितैः॥
कषाये विधिवत्तेषां कृते व्यामिश्रयेत्पुनः।
सुराष्ट्रजां सकासीसां दद्याचापि मनःशिलां ॥
हरितालञ्च मतिमांस्ततस्तामवचारयेत्।
मातुलुङ्गरसोपेतां सचौद्रामतिमर्दितां ॥
व्रणेषु दत्वा तां तिष्ठेत्त्रींस्त्रींश्च दिवसान्परं।
गम्भीरान्मेदसा जुष्टान्दुर्गन्धांश्चूर्णशोधनैः॥
उपाचरेद्भिषक् प्राज्ञः सूक्ष्मैः शोधनवर्त्तिजैः।
शुद्धलक्षणयुक्तानां कषायं रोपणं हितं ॥
तत्र कार्य्यं यथोद्दिष्टैर्द्रव्यैर्वैद्येन जानता।
अवेदनानां शुद्धानां गम्भीराणां तथैव च ॥
हिता रोपणवर्त्त्यश्च कृता रोपणवर्त्तयः।
अपेतपूतिमांसानां मांसस्थानामरोहतां ॥
कल्कः संरोहणः कार्य्यस्तिलजो मधुसंयुतः।

स माधुर्य्यात्तथौष्ण्याच्च स्नेहाच्चानिलनाशनः ॥
कषायभावान्माधुर्य्यात्तिक्तत्वाच्चापि पित्तहृत्।
औष्ण्यात्कषायभावाच्च तिक्तत्वाच्च कफे हितः ॥
शोधयेद्रोपयेच्चापि युक्तः शोधनरोपणैः।
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः ॥
पूर्व्वाभ्यां सर्पिषाचापि युक्तः संरोपणो भवेत्।
तिलवद्यवकल्कन्तु केचिदाहुर्मनीषिणः ॥
शमयेदविदग्धञ्च विदग्धमपि पाचयेत्।
पक्वं भिनत्ति भिन्नञ्च शोधयेद्रोपयेत्तथा ॥
पित्तरक्तविषागन्तून्गभीरानपि च व्रणान्।
रोपयेद्रोपणीयेन चीरसिद्धेन सर्पिषा ॥
कफवाताभिभूतानां व्रणानां मतिमान्भिषक्।
कारयेद्रोपणं तैलं भेषजैस्तद्यथोदितैः ॥
अबन्ध्यानाञ्चलस्थानां शुद्धानाञ्च प्रदुष्यतां।
दिर्हरिद्रायुतां कुर्य्याद्रोपणार्थां रसक्रियां ॥
समानां स्थिरमांसानां त्वक्स्थानां रोपणं भिषक्।
चूर्णं विदध्यान्मतिमान् प्राक्स्थानोक्तो विधिर्यथा ॥
शोधनो रोपणश्चैव विधिर्योऽयं प्रकीर्त्तितः।
सर्व्वव्रणानां सामान्ये नोक्तो दोषाविशेषतः ॥
एष आगमसिद्धत्वात्तथैव फलदर्शनात्।
मन्त्रवत्संप्रयोक्तव्यो न मीमांस्यः कथञ्चन ॥

स्वबुद्ध्या चापि विभजेत्कषायादिषु सप्तसु।
भेषजानि यथायोगं यान्युक्तानि पुरा मया॥
आद्ये द्वे पञ्चमूल्यौ तु गणो यश्चानिलापहः।
स वातदुष्टे दातव्यः कषायादिषु सप्तसु॥
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यः स्मृतः।
तौ पित्तदुष्टे दातव्यौ कषायादिषु सप्तसु॥
आरग्वधादिस्तु गणो यश्चोष्णः परिकीर्त्तितः।
तौ देयौ कफदुष्टे तु संसृष्टे संयुता गणाः॥
वातात्मकान्रुग्बहुलान्स्रावानपि च व्रणान्।
स चौमयवसर्पिर्भिर्धूपनाङ्गैश्च धूपयेत्॥
परिशुष्काल्पमांसानां गम्भीराणां तथैव च।
कुर्य्यादुत्सादनीयानि सर्पींष्यालेपनानि च॥
मांसाशिनाञ्च मांसानि भक्षयेद्विधिवन्नरः।
विशुद्धमनसस्तस्य मांसं मांसेन वर्द्धते॥
उत्सन्नमृदुमांसानां व्रणानामवसादनं।
कुर्य्याद्द्रव्यैर्यथोद्दिष्टैश्चूर्णितैर्मधुना सह॥
कठिनानाममांसानां दुष्टानां मातरिश्वना।
मृद्वी क्रिया विधातव्या शोणितं चापि मोक्षयेत्॥
वातघ्नौषधसंयुक्तान्स्नेहान्सेकांश्च कारयेत्।
व्रणेषु मृदुमांसेषु दारुणीकरणं हितं॥
धवप्रियङ्गुशोकानां रोहिण्याश्च त्वचस्तथा।

त्रिफलाधातकीपुष्परोध्रसर्जरसान्समान्॥
कृत्वा सूक्ष्माणि चूर्णानि व्रणं तैरवचूर्णयेत्।
उत्सन्नमांसान्कठिनान्कण्डूयुक्तांश्चिरोत्थितान्॥
तथैव खलु दुःशोधान् शोधयेत्क्षारकर्मणा।
स्रवतोऽश्मभवान्मूत्रं ये चान्ये रक्तवाहिनः॥
निःशेषच्छिन्नसन्धींश्च साधयेदग्निकर्मणा।
दुरूढत्वात्तु शुक्लानां कृष्णकर्म हितं भवेत्॥
भल्लातकान्वासयेत्तु क्षीरे गोमूत्रभावितान्।
ततो द्विधाच्छेदयित्वा लौहे कुम्भे निधापयेत्॥
कुम्भेऽन्यस्मिन्निखाते तु तं कुम्भमथ योजयेत्।
मुखं मुखेन सन्धाय गोमयैर्दाहयेत्ततः॥
यः स्नेहस्रवते तस्माद्ग्राहयेत्तं शनैर्भिषक्।
ग्राम्यानूपशफान्दग्धान्सूक्ष्मचूर्णानि कारयेत्॥
तैलेनानेन संसृष्टं शुक्लमालेपयेद्व्रणं।
भल्लातकविधानेन सारस्नेहांस्तु कारयेत्॥
ये च केचित्फलस्नेहा विधानं तेषु कीर्त्तितं।
दुरूढत्वात्तु कृष्णानां पाण्डुकर्म हितं भवेत्॥
सप्तरात्रं स्थितं क्षीरेच्छागले रोहिणीफलं।
तेनैव पिष्टं सुश्लक्ष्णं सवर्णकरणं हितं॥
नवं कपालिकाचूर्णं वैदुलं सर्जनाम च।
कासीसं मधुकञ्चैव क्षौद्रयुक्तं प्रलेपयेत्॥

कपित्थमुद्धृते मांसे मूत्रेणाजेन पूरयेत्॥
कासीसं रोचनां तुत्थं हरितालं मनःशिलां।
वेणुनिर्लेखनं चापि प्रपुन्नाडरसाञ्जनं॥
अधस्तादर्जुनस्यैतन्मासं भूमौ निधापयेत्।
मासादूर्द्ध्वं ततस्तेन कृष्णमालेपयेद्व्रणं॥
कुक्कुटाण्डकपालानि कतकं मधुकं समं।
तथा समुद्रमण्डूकीमणिचूर्णञ्च दापयेत्॥
गुटिका मूत्रपिष्टास्ता व्रणानां प्रतिसारणं।
हस्तिदन्तमषीं कृत्वा मुख्यञ्चैव रसाञ्जनं॥
रोमाण्येतेन जायन्ते लेपात्पाणितलेष्वपि।
चतुष्पदानां त्वग्रोमखुरशृङ्गास्थिभस्मना॥
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः।
कासीसं नक्तमालस्य पल्लवांश्चैव संहरेत्॥
कपित्थरसपिष्टानि रोमसञ्जननं परं।
रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति॥
क्षुरकर्त्तरिसन्दंशैस्तस्य रोमाणि निर्हरेत्।
शङ्खचूर्णस्य भागौ द्वौ हरितालञ्च भागिकं॥
शुक्तेन सह पिष्टानि लोमशातनमुत्तमं।
तैलं भल्लातकस्याथ स्नुहीक्षीरं तथैव च॥
प्रगृह्यैकत्र मतिमान् रोमशातनमुत्तमं।
कदलीदीर्घवृन्ताभ्यां भस्मालं लवणं शमी॥

वीजं शीतोदपिष्टं वा रोमशातनमाचरेत्।
आगारगोधिकापुच्छं रम्भालं वीजमैङ्गुदं ॥
दग्ध्वा तद्भस्मतैलाम्बु सूर्य्यपक्कं कचान्तकृत्।
वातदुष्टो व्रणो यस्तु रूक्षस्स्यात्यर्थवेदनः ॥
अधःकाये विशेषेण तत्र वस्तिर्विधीयते।
मूत्राघाते मूत्रदोषे शुक्रदोषेऽश्मरीव्रणे ॥
तथैवार्त्तवदोषे च वस्तिरण्युत्तरो हितः ॥
यस्माच्छुध्यति बन्धेन व्रणो याति च मार्दवं।
रोहत्यपि च निःशङ्कस्तस्माद्बन्धो विधीयते ॥
स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहतां।
पत्रदानं भवेत्कार्य्यं यथादोषं यथर्त्तु च ॥
एरण्डभूर्ज्जपूतीकहरिद्राणान्तु वातजे।
पत्रमाम्रबलं यच्च काश्मरीपत्रमेव च ॥
पत्राणि चीरवृक्षाणामौदकानि तथैव च।
दूषिते रक्तपित्ताभ्यां व्रणे दद्याद्विचक्षणः ॥
पाठामूर्व्वागुडूचीनां काकमाचीहरिद्रयोः।
पत्रञ्च शुकनाशाया योजयेत्कफजे व्रणे ॥
अकर्कशमविक्लिन्नमजीर्णं सुकुमारकं।
अजन्तुजग्धं मृदु च पत्रं गुणवदुच्यते ॥
स्नेहमौषधसारञ्च पट्टवस्त्रान्तरीकृतं।
न दूषयति यत्पत्रं लेपस्योपरि दापयेत् ॥

शैत्योष्ण्यजननार्थाय स्नेहसंग्रहणाय च।
दत्तौषधेषु दातव्यं पत्रं वैद्येन जानता॥
मक्षिका व्रणजातस्य निःक्षिपन्ति यदा कृमीन्।
श्वयथुर्भक्षिते तैस्तु जायते भृशदारुणः॥
तीव्रा रुजो विचित्राश्च रक्तास्रावश्च जायते।
सुरसादिर्हितस्तत्र धावने पूरणे तथा॥
सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः।
हिता गोमूत्रपिष्टाश्च सेकः क्षारोदकेन वा॥
प्रच्छाद्य मांसपेश्या च कृमीनपहरेद्व्रणात्।
विंशतिं कृमिजातीस्तु वक्ष्याम्युपरि भागशः॥
दीर्घकालातुराणान्तु कृशानां व्रणशोषिणां।
बृंहणीयो विधिः सर्व्वः कार्य्योऽग्निं परिरक्षता॥
विषजुष्टस्य विज्ञानं विषनिश्चयमेव च।
चिकित्सितञ्च वक्ष्यामि कल्पे तु प्रतिभागशः॥
कण्डूमन्तः सशोफाश्च ये च जत्रूपरि व्रणाः।
शिरोविरेचनं तेषु विदध्यात्कुशलो भिषक्॥
रुजावन्तोऽनिलाविष्टा रूक्षा ये चोर्द्ध्वजत्रुजाः।
व्रणेषु तेषु कर्त्तव्यं नस्यं वैद्येन जानता।
दोषप्रच्यवनार्थाय रुजादाहक्षयाय च॥
जिह्वादन्तसमुत्थस्य हरणार्थं मलस्य च॥
शोधनो रोपणश्चैव व्रणस्य मुखजस्य वै।

उष्णो वा यदि वा शीतः कवलग्रह इष्यते ॥
ऊर्द्ध्वजत्रुगतान् रोगान् व्रणांश्च कफवातजान्।
शोफस्रावरुजायुक्तान् धूमपानैरुपाचरेत् ॥
क्षतोष्मणो निग्रहार्थं सन्धानार्थं तथैव च।
सद्योव्रणेष्वायतेषु क्षौद्रसर्पिर्विधीयते ॥
अवगाढास्तनुमुखा ये व्रणाः शल्यपीडिताः।
निवृत्तहस्तोद्धरणा यन्त्रं तेषु विधीयते ॥
लघुमात्रो लघुश्चैव स्निग्ध उष्णोऽग्निदीपनः।
सर्वव्रणेभ्यो देयस्तु सदाहारो विजानता ॥
निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः।
रक्षाविधानैरुद्दिष्टैर्यमैः सनियमैस्तथा ॥

षण्मूलोऽष्टपरिस्रावी पञ्चलक्षणलक्षितः।
षष्ट्युपक्रमनिर्द्दिष्टश्चतुर्भिः साध्यते व्रणः ॥
योऽल्पौषधकृतो योगो बहुग्रन्थभयान्मया।
द्रव्याणां तत्समानानां तत्रावापो न दुष्यति ॥
प्रसङ्गाभिहितो यो वा बहुदुर्लभभेषजः।
यथोपपत्ति तत्रापि कार्य्यमेवं चिकित्सितं ॥
गणोक्तमपि यद्द्रव्यं भवेद्व्याधावयौगिकं।
तदुद्धरेद्यौगिकन्तु प्रक्षिपेदप्यकीर्त्तितं ॥
उपद्रवास्तु द्विविधा व्रणस्य व्रणितस्य च।
तत्र गन्धादयः पञ्च व्रणस्योपद्रवाः स्मृताः ॥

ज्वरातीसारौ मूर्च्छा च हिक्काच्छर्दिररोचकः ।
श्वासकासाविपाकाश्च तृष्णा च व्रणितस्य च ॥
व्रणक्रियास्वेवमाद्य व्यासेनोक्तास्वपि क्रियां ।
भूयोऽप्युपरि वक्ष्यामि सद्योव्रणचिकित्सिते ॥

---

॥ द्वितीयोऽध्यायः ॥

अथातः सद्योव्रणचिकित्सितं व्याख्यास्यामः ॥

धन्वन्तरिर्धर्म्मभृतां वरिष्ठो वाग्विशारदः ।
विश्वामित्रात्मजमृषिं शिष्यं सुश्रुतमन्वशात् ॥
नानाधारामुखैःशस्त्रैर्नानास्थाननिपातितैः ।
नानारूपा व्रणा ये स्युस्तेषां वक्ष्यामि लक्षणं ॥
आयताश्चतुरस्राश्च त्र्यस्रा मण्डलिनस्तथा ।
अर्द्धचन्द्रप्रतीकाशा विशालाः कुटिलास्तथा ॥
शरावनिम्नमध्याश्च यवमध्यास्तथापरे ।
एवं प्रकाराकृतयो भवन्त्यागन्तवो व्रणाः ॥
दोषजा वा स्वयं भिन्ना नतु वैद्यनिमित्तजाः ।
भिषग्व्रणाकृतिज्ञो हि न मोहमधिगच्छति ॥
दृश्यन्दुर्द्दर्शरूपेषु व्रणेषु विकृतेष्वपि ।
अनेकाकृतिरागन्तुः स भिषग्भिःपुरातनैः ॥
समासतो लक्षणतः षड्विधः परिकीर्त्तितः ।
च्छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ॥

घृष्टमाऊस्तया षष्ठं तेषां वक्ष्यामि लक्षणं।
तिरश्चीनश्चर्जुर्वापि यो व्रणश्चायतो भवेत्॥
गात्रस्य पातनं चापिच्छिन्नमित्युपदिश्यते।
कुन्तशक्त्यृष्टिखड्गाग्रविषाणादिभिराशयः॥
हतः किञ्चित्स्रवेत्तद्धि भिन्नलक्षणमुच्यते।
स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च॥
हृदुण्डुकः फुप्फुसश्च कोष्ठइत्यभिधीयते।
तस्मिन्भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते॥
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति।
मूर्च्छाश्वासतृडाध्मानमभक्तच्छन्द एव च॥
विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽचिरक्तता।
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च॥
हृच्छूलं पार्श्वयोश्चापि विशेषश्चात्र मे शृणु।
आमाशयस्थे रुधिरे रुधिरं छर्दयेत्पुनः।
आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणं॥
पक्वाशयगते चापि रुजो गौरवमेव च।
शीतता चाप्यधो नाभेः खेभ्यो रक्तस्य चागमः॥
अभिन्नेऽप्याशयेऽन्त्राणां खैः सूक्ष्मैरन्त्रपूरणं।
पिहितास्ये घटे यद्वल्लक्ष्यते तस्य गौरवं॥
सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयादिना।
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत्॥

नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितं।
विषमं व्रणमङ्गे यत्तत्वतन्त्वभिर्निर्दिशेत् ॥
प्रहारपीडनाभ्यान्तु यदङ्गं पृथुतां गतं।
सास्थि तत्पिच्चितं विद्यान्मज्जरक्तपरिप्लुतं ॥
विगतत्वग्यदङ्गं हि सङ्घर्षादन्यथापि वा।
उषास्रावान्वितं तत्तु घृष्टमित्युपदिश्यते ॥
छिन्ने भिन्ने तथा विद्धे क्षते वात्यगतिस्रवेत्।
रक्तक्षयाद्रुजस्तत्र करोति पवनो भृशं ॥
स्नेहपानं हितं तत्र तत्सेको विहितस्तथा।
वेशवारैः सकृशरैः सुस्निग्धैश्चोपनाहनं ॥
धान्यस्वेदांश्च कुर्व्वीत स्निग्धान्यालेपनानि च।
वातघ्नौषधसिद्धैश्च स्नेहैर्व्वस्तिर्व्विधीयते ॥
पिच्चिते च विघृष्टे च नातिस्रवति शोणितं।
अगच्छति भृशं तस्मिन्दाहः पाकश्च जायते ॥
तयोरूष्मणो निग्रहार्थं तथा दाहप्रपाकयोः।
शीतमालेपनं कार्य्यं परिषेकश्च शीतलः ॥
षट्स्वेतेषु यथोक्तेषुच्छिन्नादिषु समासतः।
ज्ञेयं समर्पितं सर्व्वं सद्योव्रणचिकित्सितं ॥
अत ऊर्द्धं प्रवक्ष्यामिच्छिन्नानान्तु चिकित्सितं ॥
ये व्रणा विवृताः केचिच्छिरःपार्श्वावलम्बिनः।
तान्सीव्येद्विधिनोक्तेन बध्नीयाद्गाढमेव च ॥

कर्णं स्थानादपहृतं स्थापयित्वा यथास्थितं ।
सीव्येद्यथोक्तं तैलेन स्रोतश्चाप्यभितर्पयेत् ।
कृकाटिकान्ते छिन्ने तु गच्छत्यपि समीरणे ॥
सम्यङ्निवेश्य बध्नीयात्सीव्येच्चापि निरन्तरं ।
आजेन सर्पिषा चैव परिषेकन्तु कारयेत् ॥
उत्तानोऽन्नं समश्नीयाच्छयीत च सुयन्त्रितः ।
शाखासु पतितांस्तिर्य्यक्प्रहारान्विहतान्भृशं ॥
सीव्येत्सम्यङ्निवेश्याशु सन्ध्यस्थीन्यनुपूर्व्वशः ।
बद्ध्वा वेल्लितकेनाशु ततस्तैलेन सेचयेत् ॥
चर्मणा गोफणाबन्धः कार्य्यो यो वा हितो भवेत् ।
पृष्ठे व्रणो यस्य भवेदुत्तानं शाययेत्तु तं ॥
अतोऽन्यथा चोरसिजे शाययेत्पुरुषं व्रणे ।
छिन्नां निःशेषतः शाखान्दग्ध्वा तैलेन बुद्धिमान् ॥
बध्नीयात्कोशबन्धेन प्राप्तं कार्य्यञ्च रोपणं ।
चन्दनं पद्मकं रोध्रमुत्पलानि प्रियङ्गवः ॥
हरिद्रा मधुकञ्चैव पयःस्यादत्र चाष्टमं ।
तैलमेभिर्व्विपक्वन्तु प्रधानं व्रणरोपणं ॥
चन्दनं कर्कटाख्या च सहे मांस्याङ्क्यामृते ।
हरेणवो मृणालञ्च त्रिफला पद्मकोत्पलम् ॥
त्रयोदशाङ्गं त्रिवृतमेतद्वा पयसान्वितं ।
तैलं विपक्वं सेकार्थे हितं तु व्रणरोपणे ॥

अतऊर्द्ध्वं प्रवक्ष्यामि भिन्नानान्तु चिकित्सितं।
भिन्नं नेत्रमकर्म्मण्यमभिन्नं लम्बते तु यत्॥
तन्निवेश्य यथास्थानमव्याविद्धशिरं शनैः।
पीडयेत्पाणिना सम्यक् पद्मपत्रान्तरेण तु॥
ततोऽस्य तर्पणं कार्य्यं नस्यं चानेन सर्पिषा।
आजं घृतं क्षीरपात्रं मधुकं चोत्पलानि च॥
जीवकर्षभकौ चैव पिष्ट्वा सर्पिर्व्विपाचयेत्।
सर्व्वनेत्राभिघाते तु सर्पिरेतत्प्रशस्यते॥
उदरान्मेदसो वर्त्तिर्निर्गता यस्य देहिनः।
कषायभस्मम्रृत्कीर्णां बद्धा सूत्रेण सूत्रवित्॥
अग्नितप्तेन शस्त्रेणच्छिन्द्यान्मधुसमायुतं।
बद्धा व्रणं सुजीर्णेऽन्ने सर्पिषः पानमिष्यते॥
स्नेहपानादृते चापि पयःपानं विधीयते।
शर्करामधुयष्टिभ्यां लाक्षया वा श्वदंष्ट्रया॥
चित्रासमन्वितञ्चैव रुजादाहविनाशनं।
आटोपो मरणं वा स्याच्छूलो वाऽच्छिद्यमानया॥
मेदोग्रन्थौ च यत्तैलं वक्ष्यते तच्च योजयेत्।
त्वचोऽतीत्य सिरादीनि भित्त्वा वा परिहृत्य वा॥
कोष्ठे प्रतिष्ठितं शल्यं कुर्य्यादुक्तानुपद्रवान्।
तत्रान्तर्लोहितं पाण्डुं शीतपादकराननं॥
शीतोच्छ्वासं रक्तनेत्रमानद्धञ्च विवर्ज्जयेत्।

आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ॥
पक्काशयस्थे देयञ्च विरेचनमसंशयं ।
आस्थापनञ्च निःस्नेहं कार्य्यमुष्णैर्व्विशोधनैः ॥
यवकोलकुलत्थानां निःस्नेहेन रसेन च ।
भुञ्जीतान्नं यवागूंवा पिबेत्सैन्धवसंयुतां ॥
अतिनिस्रुतरक्तो वा भिन्नकोष्ठः पिबेदसृक् ।
स्वमार्गप्रतिपन्नास्तु यस्य विण्मूत्रमारुताः ॥
व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवति मानवः ।
अभिन्नमन्त्रं निःक्रान्तं प्रवेश्यं नान्यथाभवेत् ॥
पिपीलिकाशिरोग्रस्तं तदप्येके वदन्ति तु ।
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः ॥
प्रवेशयेत्कृत्तनखो घृतेनाक्तं शनैः शनैः ।
प्रवेशयेत्क्षीरसिक्तं शुष्कमन्त्रं घृताप्लुतं ॥
अङ्गुल्याभिमृशेत्कण्ठं जलेनोद्वेजयेदपि ।
हस्तपादेषु संगृह्य समुत्थाप्य महाबलाः ॥
भवत्यन्तःप्रवेशस्तु यथा निर्द्धुनुयुस्तथा ।
तथान्त्राणि विशन्त्यन्तः स्वाङ्कलां पीडयन्ति च ॥
व्रणाल्पत्वाद्बहुत्वाद्वा दुःप्रवेशं भवेत्तु यत् ।
तदापाद्य प्रमाणेन भिषगन्त्रं प्रवेशयेत् ॥
यथास्थानं निविष्टे च व्रणं सीव्येदतन्द्रितः ।
स्थानादपेतमादत्ते प्राणान् गुम्फितमेव वा ॥

वेष्टयित्वा तु पट्टेन घृतसेकं प्रदापयेत्।
घृतं पिबेत्सुखोष्णञ्च चित्रातैलसमन्वितं॥
मृदुक्रियार्थं शक्नतो वायोश्चाधःप्रवृत्तये।
ततस्तैलमिदं कुर्य्याद्रोपणार्थं चिकित्सकः॥
त्वचोऽश्वकर्णधवयोर्मोचकोमेषशृङ्गयोः।
शल्लक्यर्ज्जुनयोश्चापि विदार्य्याः क्षीरिणां तथा॥
बलामूलानि चाहृत्य तैलमेतैर्व्विपाचयेत्।
व्रणं संरोपयेत्तेन वर्धमात्रं यनेत च॥
आदौ निरस्तमुष्कस्य जलेन प्रोक्ष्य चाक्षिणी।
प्रवेश्य तुन्नसेवन्या मुष्कौ सीव्येत्ततः परं॥
कार्य्यो गोफणिकाबन्धः कक्ष्यामाविश्य यन्त्रकं।
न कुर्य्यात्स्नेहसेकञ्च तेन क्लियति हि व्रणः॥
कालानुसार्य्यागुर्व्वेलाजातीचन्दनपद्मकैः।
शिलादार्व्यमृतातुत्थैस्तैलं कुर्व्वीत रोपणं॥
शिरसोऽपहृते शस्ते वालवर्त्तिं प्रवेशयेत्।
वालवर्त्त्यामदत्तायां मस्तुलुङ्गं व्रणात्स्रवेत्॥
हन्यादेनं ततो वायुस्तस्मादेवमुपाचरेत्।
व्रणे रोहति चैकैकं शनैर्व्वालमपकर्षयेत्॥
गात्राद्वापहृतेऽन्यस्मात्स्नेहवर्त्तिं प्रवेशयेत्।
कृते निःशोणिते चापि विधिः सद्यःक्षते हितः॥
दूरावगाढाः सूक्ष्माः स्युर्ये व्रणास्तान्विशोणितान्।

छत्वा सूक्ष्मेण नेत्रेण चक्रतैलेन तर्पयेत् ॥
समङ्गां रजनीं पद्मां त्रिवर्गं तुल्यमेव च ।
विडङ्गं कटुकां पथ्यां गुडूचीं सकरञ्जिकां ॥
संहृत्य विपचेत्काले तैलं रोपणमुत्तमं ।
तालीशं पद्मकं मांसी हरेणगुरुचन्दनं ॥
हरिद्रे पद्मवीजानि सोशीरं मधुकञ्च तैः ।
पक्कं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमं ॥
क्षते क्षतविधिः कार्य्यः पिच्चिते भग्नवद्विधिः ।
घृष्टे रुजो निगृह्याशु चूर्णैरुपचरेद्व्रणं ॥
विश्लिष्टदेहं पतितं मथितं हतमेव च ।
वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशनं ॥
अयमेव विधिः कार्य्यः क्षीणे मर्म्महते तथा ।
रोपणे सपरीषेके पाने च व्रणिनां सदा ॥
तैलं घृतं वा संयोज्यं शरीरर्त्तूनवेक्ष्य हि ।
घृतानि यानि वक्ष्यामि यत्नतः पित्तविद्रधौ ॥
सद्योव्रणेषु देयानि तानि वैद्येन जानता ।
सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत् ॥
सर्पिषा नातिशीतेन बलातैलेन वा पुनः ।
समङ्गां रजनीं पद्मां पथ्यां तुत्थं सुवर्चलां ॥
पद्मकं रोध्रमधुकं विडङ्गानि हरेणुकं ।
तालीशपत्रं नलदं चन्दनं पद्मकेशरं ॥

मञ्जिष्ठोशीरलाचाश्च चीरिणा चापि पल्लवान्।
पियालवीजं तिन्दुक्यास्तरुणानि फलानि च॥
यथालाभं समाहृत्य तैलमेभिर्विपाचयेत्।
सद्योव्रणानां सर्व्वेषामदुष्टानान्तु रोपणं॥
कषायमधुराः शीताः क्रियाः स्निग्धाश्च योजयेत्॥
सद्योव्रणानां सप्ताहं पश्चात्पूर्व्वोक्रमाचरेत्।
दुष्टव्रणेषु कर्त्तव्यमूर्द्धंचाधश्च शोधनं॥
विशोषणं तथाहारः शोणितस्य च मोचणं।
कषायं राजवृचादौ सुरसादौ च धावनं॥
तयोरेव कषायेण तैलं शोधनमिष्यते।
चारकल्पेन वा तैलं चारद्रव्येण साधितं॥
द्रवन्ती चिरविल्वश्च दन्ती चित्रकमेव च।
पृथ्वीका निम्बपत्राणि कासीसं तुत्थमेव च॥
वृहत्तेजोवती नीली हरिद्रे सैन्धवं तिलाः।
भूमीकदम्बः सुवहा शुकाख्या लाङ्गलाह्वया॥
नैपाली जालिनी चैव मदयन्ती मृगादनी।
सुधामूर्व्वार्ककीटारिहरितालकरञ्जिकाः॥
यथोपपत्ति कर्त्तव्यं तैलमेतैस्तु शोधनं।
घृतं वा यदि वा शातं कल्काः संशोधनास्तथा॥
सैन्धवं वृहदेरण्डपत्रकल्कास्तु वातिके।
त्रिवृद्धरिद्रामधुककल्काः पैत्ते तिलैर्युतः॥

कफजे तिलतेजाह्वा दन्तीस्वर्ज्जिकचित्रकाः ।
दुष्टव्रणविधिः कार्य्यो मेहकुष्ठव्रणेष्वपि ॥
षड्विधः प्राक् प्रदिष्टो यः सद्योव्रणविनिश्चयः ।
नातः शक्यं परं वक्तुमपि निश्चितवादिभिः ॥
उपसर्गैर्निपातैश्च तत्तु पण्डितमानिनः ।
केचित्संयोज्य भाषन्ते बहुधा मानगर्व्विताः ॥
बहु तद्भाषितं तेषां षट्स्वेवेवावतिष्ठते ॥
विशेषा इव सामान्ये षट्त्वन्तु परमं मतं ।

---

॥ तृतीयोऽध्यायः ॥

अथातो भग्नानां चिकित्सितं व्याख्यास्यामः ॥
अल्पाशिनोऽनात्मवतो जन्तोर्व्वातात्मकस्य च ।
उपद्रवैर्व्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥
लवणं कटुकं क्षारमम्लं मैथुनमातपं ।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च ॥
शालिर्म्मांसरसः क्षीरं सर्पिर्यूषः सतीनजः ।
बृंहणं चान्नपानं स्याद्देयं भग्नाय जानता ॥
मधूकोडुम्बराश्वत्थपलाशककुभत्वचः ।
वंशसर्ज्जवटानां वा कुशार्थमुपसंहरेत् ॥
आलेपनार्थं मञ्जिष्ठां मधुकं रक्तचन्दनं ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च संहरेत् ।

सप्ताहादथ सप्ताहात्सौम्येष्वृतुषु बन्धनं ॥
साधारणेषु कर्त्तव्यं पञ्चमे पञ्चमेऽहनि ।
आग्नेयेषु त्र्यहात्कुर्य्याद्भग्नदोषवशेन वा ॥
तत्रातिशिथिलं बद्धे सन्धिस्थैर्य्यं न जायते ॥
गाढेनापि त्वगादीनां शोफो रुक्पाक एव च ।
तस्मात्साधारणं बन्धं भग्ने शंसन्ति तद्विदः ॥
न्यग्रोधादिकषायन्तु सुशीतं परिषेचने ।
पञ्चमूलीविपक्वन्तु क्षीरं कुर्य्यात्सवेदने ॥
सुखोष्णमवचार्य्यं वा चक्रतैलं विजानता ।
विभज्य कालं दोषञ्च दोषघ्नौषधसंयुतं ॥
परिषेकं प्रदेहञ्च विदध्याच्छीतमेव च ।
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितं ॥
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ।
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ॥
प्रतिसार्य्य कषायैस्तु शेषं भग्नवदाचरेत् ।
प्रथमे वयसि त्वेवं भग्नं सुकरमादिशेत् ॥
अल्पदोषस्य जन्तोस्तु काले च शिशिरात्मके ।
प्रथमे वयसि त्वेवं मासात्सन्धिः स्थिरो भवेत् ॥
मध्यमे द्विगुणात्कालादुत्तरे त्रिगुणात्स्मृतः ।
अवनामितमुन्नह्येदुन्नतं चावपीडयेत् ॥
आञ्छेदतिक्षिप्तमधो गतं चोपरि वर्त्तयेत् ।

आञ्छनैः पीडनैश्चैव सङ्क्षेपैर्बन्धनैस्तथा ॥
सन्धीन् शरीरे सर्व्वांस्तु चलानप्यचलानपि।
एतैस्तु स्थापनोपायैः स्थापयेन्मतिमान्भिषक् ॥
उत्पिष्टमथ विश्लिष्टं सन्धिं वैद्यो न घट्टयेत्।
तस्य शीतान्परीषेकान्प्रदेहांश्चावचारयेत् ॥
अभिघाते हृते सन्धिः स्वां याति प्रकृतिं पुनः।
घृतदिग्धेन पट्टेन वेष्टयित्वा यथाविधि ॥
पट्टोपरि कुशान्दत्वा यथावद्बन्धमाचरेत्।
प्रत्यङ्गभग्नस्य विधिरत ऊर्द्ध्वं प्रवक्ष्यते ॥
नखसन्धिं समुत्पिष्टं रक्तानुगतमारया।
अवमथ्य स्रुते रक्ते शालिपिष्टेन लेपयेत् ॥
भग्नां वा सन्धिमुक्तां वा स्थापयित्वाङ्गुलीं समं।
अणुनावेष्ट्य पट्टेन घृतसेकं प्रदापयेत् ॥
अभ्यज्य सर्पिषा पादं तलभग्नं कुशोत्तरं।
वस्त्रपट्टेन बध्नीयान्नच व्यायाममाचरेत् ॥
अभ्यज्यायामयेज्जङ्घामूरुञ्च सुसमाहितः।
दत्वा तृचलत्वचः शीता वस्त्रपट्टेन वेष्टयेत् ॥
मतिमांश्चक्रयोगेन आञ्छेदूर्ध्वंस्थि निर्गतं।
स्फुटितं पिच्चितं चापि बध्नीयात्पूर्व्ववद्भिषक् ॥
आञ्छेदूर्द्धमधो वापि कटीभग्नन्तु मानवं।
ततः स्थानस्थिते सन्धौ वस्तिभिः समुपाचरेत् ॥

पर्य्यङ्कास्वथ भग्नासु घृताभ्यक्तस्य तिष्ठतः।
दक्षिणास्वथ वा वामास्वनुमृज्य निबन्धनीः॥
ततः कवलिकान्दत्वा वेष्टयेत्सुसमाहितः।
तैलपूर्णे कटाहे वा द्रोण्यां वा शाययेन्नरं॥
मुषलेनोत्क्षिपेत्कक्षामंसस्न्धौ विसंहते।
स्थानस्थितञ्च बध्नीत स्वस्तिकेन विचक्षणः॥
कौर्प्परन्तु तथा सन्धिमङ्गुष्ठेनानुमार्ज्जयेत्।
अनुमृज्य ततः सन्धिं पीडयेत् कूर्परास्थुतं।
प्रसार्य्याकुञ्चयेच्चैनं स्नेहसेकञ्च दापयेत्॥
एवं जानुनि गुल्फे च मणिबन्धे च कारयेत्।
उभे तले समे कृत्वा तलभग्नस्य देहिनः॥
बध्नीयादामतैलेन परिषेकञ्च कारयेत्।
प्राग्गोमयमयं पिण्डं धारयेन्मृन्मयं ततः॥
हस्ते जातबले चापि कुर्य्यात्पाषाणधारणं।
सन्नमुन्नमयेत्खिन्नमचक्रं मुषलेन तु॥
तथोन्नतं पीडयेच्च बध्नीयाद्गाढमेव च।
ऊरुवद्वापि कर्त्तव्यं बाहुभग्नचिकित्सितं॥
ग्रीवायां तु विवृत्तायां प्रविष्टायामधोऽपि च।
अवटावयहन्वोश्च प्रगृह्योन्नमयेन्नरं॥
तथा कुशान्सम्मं दत्वा वस्त्रपट्टेन वेष्टयेत्॥
उत्तानं शाययेच्चैनं सप्तरात्रमतन्द्रितः।

हन्वस्थिनी समानीय हनुसन्धौ विसंहते॥
स्वेदयित्वा स्थिते सम्यक्पञ्चाङ्गीं वितरेद्भिषक्।
वातघ्नमधुरैः सर्पिः सिद्धं नस्ये च पूजितं॥
अभग्नांश्चलितान्दन्तान्सरक्तानवपीडयेत्।
तरुणस्य मनुष्यस्य शीतैरालिपयेद्बहिः॥
सिक्ताम्बुभिस्ततः शीतैः सन्धानीयैरुपाचरेत्।
उत्पलस्य च नालेन चीरपानं विधीयते॥
जीर्णस्यतु मनुष्यस्य वर्ज्जयेच्चलितान् द्विजान्।
नासां सन्नां विवृत्तां वा ऋज्वीं कृत्वा शलाकया॥
पृथङ्नासिकयोर्नाड्यौ द्विमुख्यौ सम्प्रवेशयेत्।
ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत्॥
भग्नं कर्णञ्च बध्नीयात्सम्मं कृत्वा घृतप्लुतं।
सद्यःक्षतविधानञ्च ततः पश्चात्समाचरेत्॥
मस्तुलुङ्गादिना भिन्ने कपाले मधुसर्पिषी।
दत्वा ततो निबध्नीयात्सम्याहञ्च पिवेद्घृतं॥
पतनादभिघाताद्वा ग्लूनमङ्गं यदक्षतं।
शीतान्प्रदेहान् सेकांश्च भिषक् तस्यावचारयेत्॥
अथ जङ्घोरुभग्नानां कपाटशयनं हितं।
कीलका बन्धनार्थञ्च पञ्च कार्य्या विजानता॥
यथा न चलनं तस्य भग्नस्य क्रियते तथा।
सन्धेरुभयतो द्वौ द्वौ तले चैकश्च कीलकः॥

श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ।
भग्नसन्धिविमोक्षेषु विधिमेनं समाचरेत् ॥
सन्धींश्चिरविमुक्तांस्तु स्निग्धान्स्विन्नान्मृदूकृतान्।
उक्तैर्व्विधानैर्ब्बुद्ध्या च सम्यक्प्रकृतिमानयेत् ॥
काण्डभग्ने प्ररूढे तु विषमोल्वणसंहिते।
आपोथ्य शमयेद्भग्नं ततो भग्नवदाचरेत् ॥
कल्पयेन्निर्गतं शुष्कं व्रणान्तेऽस्थि समाहितः ।
सन्ध्यन्ते वा क्रियां कुर्य्यात्सव्रणे व्रणभग्नवत् ॥
ऊर्द्धकाये तु भग्नानां मस्तिक्यं कर्णपूरणं ।
घृतपानं हितं नस्यं प्रशाखास्वनुवासनं ॥

अत ऊर्द्धं प्रवक्ष्यामि तैलं भग्नस्य साधकं ।
रात्रौ रात्रौ तिलान्कृष्णान्वासयेदस्थिरे जले ॥
दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत् ।
तृतीयं सप्तरात्रं वा भावयेन्मधुकाम्बुना ।
ततः क्षीरे पुनः पीतान्सुशुष्कांश्चूर्णयेद्भिषक् ॥
काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां तथा ।
कुष्ठं सर्ज्जरसं मांसीं सुरदारु सचन्दनं ॥
शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत् ।
पीडनार्थञ्च कर्त्तव्यं सर्व्वगन्धशृतं पयः ॥
चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक् ।
एलामंशुमतीं पत्रं जीवकं तगरं तथा ॥

रोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिणं।
शैरेयकं क्षीरशुक्लामनन्तां समधूलिकां॥
पिष्ट्वा शृङ्गाटकञ्चैव पूर्व्वोक्तान्यौषधानि च।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्व्वकर्म्मसु।
आक्षेपके पक्षघाते तालुशोषे तथार्द्दिते ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे।
वाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने।
ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते॥
मुखञ्च पद्मप्रतिमं सुसुगन्धिसमीरणं।
गन्धतैलमिदं नाम्ना सर्व्ववातविकारनुत्॥
राजार्हमेतत्कर्त्तव्यं राज्ञामेव विचक्षणैः।
त्रपुसाक्षप्रियालानां तैलानि मधुरैः सह॥
वसां दत्वा यथालाभं क्षीरे दशगुणे पचेत्।
स्नेहोत्तममिदं चाशु कुर्य्याद्भग्नप्रसाधनं॥
पानाभ्यञ्जननस्येषु वस्तिकर्म्मणि सेचने।
भग्नं नैति यथापाकं प्रयतेत तथा भिषक्॥
पक्कमांसशिरास्नायु तद्धि कृच्छ्रेण सिध्यति।
भग्नं सन्धिमनाविद्धमहीनाङ्गमनुल्वणं॥
सुखचेष्टाप्रचारञ्च संहितं सम्यगादिशेत्।

---

॥ चतुर्थोऽध्यायः ॥

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ॥

आमाशयगते वातेच्छर्द्दयित्वा यथाक्रमं ।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥
चित्रकेन्द्रयवे पाठा कटुकातिविषाभया ।
वातव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥
पक्वाशयगते चापि देयं स्नेहविरेचनं ।
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥
कार्य्यो वस्तिगते चापि विधिर्व्वस्तिविशोधनः ।
श्रोत्रादिषु प्रकुपिते कार्य्यश्चानिलहा क्रमः ॥
स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च ।
त्वङ्मांसासृक्सिरां प्राप्ते कुर्य्याच्चासृग्विमोक्षणं ॥
स्नेहोपनाहाग्निकर्म्मबन्धनोन्मर्द्दनानि च ।
स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्य्याद्वायावतन्द्रितः ॥
निरुद्धेऽस्थनि वा वायौ पाणिमन्थेन दारिते ।
नाडीं दत्वास्थनि भिषक् चूषयेत्पवनं बली ॥
शुक्रप्राप्तेऽनिले कार्य्यं शुक्रदोषचिकित्सितं ।
अवगाहकुटीकर्षूप्रस्तराभ्यङ्गवस्तिभिः॥
जयेत्सर्व्वाङ्गजं वातं सिरामोक्षैश्च बुद्धिमान्।
एकाङ्गगञ्च मतिमान् शृङ्गैश्चावस्थितं जयेत् ॥
बलासपित्तरक्तैस्तु संसृष्टमविरोधिभिः ।

सुस्निग्धैस्तैलस्नेहैश्चैवं कुर्य्यात्तु वङ्गभिषक् ॥
दिह्याच्च लवणागारधूमैस्तैलसमन्वितैः।
पञ्चमूलीशृतं चीरं फलाम्लो रस एव च ॥
सुस्निग्धो धान्ययूषो वा हितो वातविकारिणां।
काकोल्यादिः सवातघ्नः सर्व्वाम्लद्रव्यसंयुतः ॥
सानूपोदकमांसस्तु सर्व्वस्नेहसमन्वितः।
सुखोष्णः स्पष्टलवणः शाल्वणः परिकीर्त्तितः ॥
तेनोपनाहं कुर्व्वीत सर्व्वदा वातरोगिणां।
कुञ्चमानं रुजार्त्तं वा गात्रं स्तब्धमथापि वा ॥
गाढं पट्टैर्निबध्नीयात्चौमकार्पासकौर्णिकैः।
विडालनकुलोष्ट्राणां चर्म्मगोणां मृगस्य वा ॥
प्रवेशयेद्वा स्वभ्यक्तं शाल्वणेनोपनाहितं।
स्कन्धवक्षस्त्रिकप्राप्तं वायुं मन्यागतं तथा ॥
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितं।
शिरोगतं शिरोवस्तिर्हन्ति वास्थग्निमोचणं ॥
स्नेहमात्रासहस्रन्तु धारयेत्तत्र योगतः।
सर्व्वाङ्गगतमेकाङ्गस्थितं वापि समीरणं ॥
रुणद्धि केवलो वस्तिर्व्वायुवेगमिवाचलः।
स्नेहस्वेदस्तथाभ्यङ्गो वस्तिःस्नेहविरेचनं॥
शिरोवस्तिः शिरःस्नेहो धूमः स्नैहिक एव च।
सुखोष्णः स्नेहगण्डूषो नस्यं स्नैहिकमेव च॥

रसाः क्षीराणि मांसानि स्नेहाः स्नेहान्वितञ्च यत्।
भोजनानि फलाम्लानि स्निग्धानि लवणानि च॥
सुखोष्णाश्च परीषेकास्तथा संवाहनानि च।
कुङ्कुमागुरुपत्राणि कुष्ठैलातगराणि च॥
कौशेयौर्णिकरोमाणि कार्पासानि गुरूणि च।
निवातातपयुक्तानि तथा गर्भगृहाणि च॥
मृदी शय्याग्निसन्तापो ब्रह्मचर्यं तथैव च।
समासेनैवमादीनि योज्यान्यनिलरोगिषु॥

त्रिवृद्दन्तीसुवर्णक्षीरीसप्तलाशङ्खिनीत्रिफलाविडङ्गानामक्षसमाः कल्का बिल्वमात्रः कल्कस्तिल्वकमूलकम्पिल्लकयोस्त्रिफलारसदधिपात्रे द्वे द्वे घृतपात्रमेकं तदैकध्यं संसृज्य विपचेत्तिल्वकसर्पिरेतत्स्नेहविरेचनमुपदिशन्ति वातरोगेषु। तिल्वकविधिरेवाशोकरम्यकयोर्द्रष्टव्यः॥

तिलपरिपीडनोपकरणकाष्ठान्याहृत्यानल्पकालं तैलपरिपीतान्यणूनि खण्डशः कल्पयित्वावचुद्य महति कटाहे पानीये आप्लाव्य क्वाथयेत्ततः स्नेहमम्बुपृष्ठाद्यदुदेति तत्सरकपाणिरन्यतरेणादाय वातघ्नौषधप्रतीवापञ्च स्नेहपाककल्पेन विपचेदेतदणुतैलमुपदिशन्ति वातरोगेषु। अणुभ्यस्तैलद्रव्येभ्यो निष्पाद्यतइत्यणुतैलं॥

अथ महापञ्चमूलकाष्ठैर्बहुभिरवदह्यावनिप्रदेशमसितमुषितमेकरात्रमुपशान्तेऽग्नावपोह्य भस्म निहतां भूमिं विदारिगन्धादिसिद्धेन तैलघटशतेन तुल्यपयसाभिषिच्यैकरात्रमवस्थाप्य ततो

यावती मृत्तिका स्निग्धा स्यात्तामादायोष्णोदकेन महति कटाहेऽ
भ्यासिञ्चेत्तत्र यत्तैलमुत्तिष्ठेत्तत्पाणिभ्यां पर्य्यादाय स्वनुगुप्तं निद
ध्यात्। ततस्तैलं वातहरौषधकाथमांसरसक्षीराम्लभागसहस्रेण सह
स्रपाकं विपचेद्यावता कालेन शक्नोति पक्तुं प्रतिवापश्चात्र हैमवता
दक्षिणापथगाश्च गन्धा वातघ्नानि च तस्मिन् सिध्यति शङ्खाना
ध्मापयेद्दुन्दुभिं घातयेच्छत्रं धारयेद्बालव्यजनैश्च वीजयेद्ब्राह्मण
सहस्रं भोजयेत् तत्साधु सिद्धमवतार्य्य सौवर्णे राजते मृन्मये वा
पात्रे स्वनुगुप्तं निदध्यात्तदेतत् सहस्रपाकमप्रतिवारवीर्य्यं राजार्हं
तैलमेवं भागशतविपक्वं शतपाकं॥

गन्धर्व्वहस्तकमुष्ककनक्तमालाटरूषकपूतीकारग्वधचित्रका
दीनां पत्राण्यार्द्राणि लवणेन सहोदूखलेऽवक्षुद्य स्नेहघटे प्रक्षिप्या
वलिप्य गोशकृद्भिर्दाहयेदेतत्पत्रलवणमुपदिशन्ति वातरोगेषु ॥
पत्रलवणं ॥

एवं स्नुहीकाण्डवार्त्ताकुशिग्रुलवणानि सङ्क्षुद्य घटं पूरयित्वा
सर्पिस्तैलवसामज्जभिःप्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेदेतत्स्नेहलवण
मुपदिशन्ति वातरोगेषु॥काण्डलवणं ॥

गण्डीरपलाशकुटजविल्वार्कस्नुह्यपामार्गपाटलापारिभद्रकना
देयीकृष्णगन्धानीपनिदिग्धिकाटरूषकनक्तमालकपूतिकबृहतीकण्ट
कारिकाभल्लातकेङ्गुदीवैजयन्तीकदलीवर्षाभूक्षीवेरक्षुरकेन्द्रवारुणी
श्वेतमोचकाशोका इत्येवं वर्गं समूलपत्रशाखमार्द्रमाहृत्य लवणेन
सह संसृष्टं पूर्व्ववद्दग्ध्वा क्षारकल्पेन परिस्राव्य विपचेदेतत्प्रति

वापश्चात्र हिङ्ग्वादिभिः पिप्पल्यादिभिर्व्वा। इत्येतत्कल्याणकलवणं वातरोगेषु गुल्मप्लीहाग्निसङ्गाजीर्णार्श्तोऽरोचकार्त्तानां कासादिभि रुपद्रुतानां चोपदिशन्ति पानभोजनेष्विति॥

भवति चात्र॥ विष्यन्दनादुष्णभावाद्दोषाणाञ्च विपाचनात्।
संस्कारपाचनाच्चेदं वातरोगेषु शस्यते॥

---

॥ पञ्चमोऽध्यायः॥

अथातोमहावातव्याधिचिकित्सितं व्याख्यास्यामः॥

द्विविधं वातशोणितमुत्तानमवगाढञ्चेत्येके भाषन्ते तत्तु न सम्यक्कुष्ठवदुत्तानं भूत्वा कालान्तरेणावगाढीभवति तस्मान्न द्विविधं॥

तत्र बलवद्विग्रहादिभिः प्रकुपितस्य वायोर्गुरूष्णाध्यशनशीलस्य प्रदुष्टं शोणितं मार्गमावृत्य वातेन सहैकीभूतं युगपद्वात रक्तनिमित्तां वेदनां जनयतीति वातरक्तं तत्तु पूर्व्वं हस्तपादयो रवस्थानं कृत्वा पश्चाद्देहं व्याप्नोति। तस्य पूर्व्वरूपाणि तोददाह कण्डूशोफस्तम्भत्वक्पारुष्यसिरास्नायुधमनिस्पन्दनसक्थिदौर्ब्बल्यानि श्यावरक्तमण्डलोत्पत्तिश्चाकस्मात्पाणिपादतलाङ्गलिगुल्फ प्रभृतिषु॥ तत्राप्रतिकारिणोऽपचारिणश्च रोगो व्यक्तस्तस्य लक्षणमुक्तं तत्राप्रतिकारिणो वैकल्यं भवति॥

भवति चात्र॥ प्रायशः सुकुमाराणां मिथ्याहारविहारिणां।
स्थूलानां सुखिनां चापि वातरक्तं प्रकुप्यति॥

तत्र प्राणमांसक्षयपिपासाज्वरमूर्च्छाश्वासकासस्तम्भारोचकाविपाकविसरणसङ्कोचनैरनुपद्रुतं बलवन्तमात्मवन्तमुपकरणवन्तं चोपक्रमेत् ॥

तत्रादावेव बहुवातरूक्षम्लानाङ्गादृते मार्गावरणाद्दुष्टशोणितमसकृदल्पाल्पमवसिञ्चेद्वातकोपभयात्ततो वमनादिभिरुपक्रमैरुपपाद्य प्रतिसंसृष्टभक्तं वातप्रबले पुराणघृतं पाययेदजाक्षीरं चार्द्धतैलं मधुकाक्षयुक्तं शृगालविन्नासिद्धं वा शर्करामधुमधुरं शुण्ठीशृङ्गाटककशेरुकसिद्धं वा श्यामारास्नासुषवीशृगालविन्नापीलुशतावरीश्वदंष्ट्रादिपञ्चमूलीसिद्धं वा ॥ द्विपञ्चमूलीक्वाथाद्विगुणसिद्धेन च पयसा मधुकमेषशृङ्गीश्वदंष्ट्रासरलभद्रदारुवचासुरभिकल्कप्रतीवापं तैलं पाचयित्वा पानादिषूपयुञ्जीत शतावरीमयूरकमधुकक्षीरविदारीबलातिबलातृणपञ्चमूलीक्वाथसिद्धं वा काकोल्यादिप्रतिवापं बलातैलं शतपाकञ्चेति ॥ वातहरमूलसिद्धेन च पयसा परिषेचनमम्लेन वा कुर्व्वीत ॥ यवमधुकैरण्डतिलवर्षाभूभिर्व्वा प्रदेहः कार्य्यः ॥

तत्र चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु प्रत्येकशः काकोलीक्षीरकाकोलीजीवकर्षभकबलातिबलाबिसमृणालशृगालविन्नामेषशृङ्गीपियालशर्कराकशेरुकसुरभिवचाकल्कमिश्रेषूपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धाः पञ्च पायसा व्याख्याताः ॥ स्नैहिकफलसारोत्कारिका वा ॥ चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु विचित्रमत्स्यपिशितवेशवारो वा ॥ बिल्वपेशिकातगरदेवदारुसरलारास्नाहरेणु

कुष्ठशतपुष्पासुरादधिमस्तुयुक्त उपनाहः ॥ मातुलुङ्गाम्लसैन्धवघृतमिश्रो मधुशिग्रुमूलमालेपे तिलकल्कश्चेति वातप्रबले ॥

पित्तप्रबले द्राक्षारेवतकटूफलपयस्यामधुकचन्दनकाश्मर्य्यकषायं शर्करामधुमधुरं पाययेत्। शतावरीमधुकपटोलत्रिफलाकटुरोहिणीकषायं गुडूचीकषायं वा पित्तज्वरहरचन्दनादिकषायं शर्करा मधुमधुरं तिक्तकषायसिद्धं वा सर्पिः ॥

बिसमृणालभद्रश्रियपद्मककषायेणाद्धं क्षीरेण परिषेकः॥ क्षीरेक्षुरसमधुशर्करातण्डुलोदकैर्व्वा द्राक्षेक्षुकषायमिश्रैर्मस्तुमधुधान्याम्लैर्जीवनीयसिद्धेन वा सर्पिषाभ्यङ्गः ॥

शतधौतघृतेन वा काकोल्यादिकल्कविपक्वेन वा सर्पिषा शालिषष्टिकनलवञ्जुलतालीशशृङ्गाटकगलोद्यगौरीगैरिकशैवलपद्मकपद्मपत्रप्रभृतिभिर्धान्याम्लपिष्टैः प्रदेहो घृतमिश्रः॥ वातप्रबलेऽप्येष सुखोष्णः प्रदेहः कार्य्यः॥ रक्तप्रबलेऽप्येवं बहुशश्च शोणितमवसेचयेत् शीततमाश्च प्रदेहाः कार्य्या इति॥

श्लेष्मप्रबले त्वामलकहरिद्राकषायं मधुमधुरं पाययेत् ॥ त्रिफलाकषायं वा मधुकशृङ्गवेरहरीतकीतिक्तरोहिणीकल्कं वा सक्षौद्रमूत्रं तोयेन गुडहरीतकीं वा भक्षयेत् ॥

तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्वाथैः परिषेकः॥ आरग्वधादिकषायैर्व्वोष्णैः । मस्तुमूत्रसुराशुक्तमधुकसारिवापद्मकसिद्धं वा घृतमभ्यङ्गः। तिलसर्षपातसीयवचूर्णानि श्लेष्मातककपित्थमधुशिग्रुमिश्राणि क्षारमूत्रपिष्टः प्रदेहः ॥

श्वेतसर्षपकल्कः तिलाश्वगन्धाकल्कः प्रियालसेलुकपित्थत्वक्कल्कः मधुशिग्रुपुनर्नवाकल्कः व्योषतिक्ताष्टथक्पर्णीबृहतीकल्क इत्येते पञ्च प्रदेहाः सुखोष्णाः क्षारोदकपिष्टाः ॥

शालपर्णी पृश्निपर्णी बृहत्यौ वा क्षीरपिष्टास्तर्पणमिश्राः ॥ संसर्गे सन्निपाते च क्रियापथमुक्तं मिश्रं कुर्य्यात् ॥

सर्व्वेषु गुडहरीतकीं वा सेवेत पिप्पलीर्व्वा क्षीरपिष्टा वारिपिष्टा वा पञ्चाभिवृद्ध्या दशाभिवृद्ध्या वा पिबेत्क्षीरौदनाहारो दशरात्रं भूयश्चापकर्षयेदेवं यावत्पञ्चदश चेति तदेतत्पिप्पलीवर्द्धमानकं वातशोणितविषमज्वरारोचकपाण्डुरोगप्लीहोदरार्शःकासश्वासशोफशोषाग्निसादहृद्रोगोदराण्युपहन्ति ॥

जीवनीयप्रतीवापं सर्पिः पयसा पाचयित्वा ऽभ्यञ्जेत् ॥

सहासहदेवाचन्दनमूर्व्वामुस्ताप्रियालशतावरीकशेरुपद्मकमधुकशतपुष्पाकुष्ठानि क्षीरपिष्टः प्रदेहो घृतमण्डयुक्तः ॥

सैरेयकाटरूषकबलातिबलाजीवन्तीसुषवीकल्को वा छागक्षीरपिष्टः ॥

काश्मर्य्यमधुकतर्पणकल्को वा मधूच्छिष्टमञ्जिष्ठासर्ज्जरससारिवाक्षीरसिद्धं पिण्डतैलमभ्यङ्गः ॥

सर्व्वेषु च पुराणघृतमामलकरसविपक्वं वा पानार्थं ॥ जीवनीयसिद्धं परिषेकार्थं काकोल्यादिकाथकल्कसिद्धं वा सुषवीकाथसिद्धं वा कारवेल्लककाथमाचसिद्धं वा ॥ बलातैलं वा परि

षेकावगाहवस्तिभोजनेषु शालिषष्टिकयवगोधूमान्नमनवं भुञ्जीत पयसा जाङ्गलरसेन वा मुद्गयूषेणवानम्लेन ॥

शोणितमोक्षञ्चाभीक्ष्णं कुर्व्वीत । उच्छ्रितदोषे च वमन विरेचनास्थापनानुवासनकर्म्म कर्त्तव्यं ॥

भवन्ति चात्र ॥ एवमाद्यैः क्रियायोगैरचिरोत्पतितं सुखं ।
वातासृक् साध्यते वैद्यैर्याप्यते तु चिरोत्थितं ॥
उपनाहपरीषेकप्रदेहाभ्यञ्जनानि च ।
शरणान्यप्रवातानि मनोज्ञानि महान्ति च ॥
मृदुगण्डोपधानानि शयनानि सुखानि च ।
वातरक्ते प्रशस्यन्ते मृदुसंवाहनानि च ॥
व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनं ।
दिवास्वप्नमभिष्यन्दि गुरु चान्नं विवर्जयेत् ॥

अपतानकिनमस्रस्ताक्षमवक्रभ्रुवमस्तब्धमेढ्रमस्वेदनमवेपनम प्रलापिनमखट्वापातिनमवहिरायामिनं चोपक्रमेत् ॥

तत्र प्रागेव स्नेहाभ्यक्तं स्विन्नशरीरमवपीडनेन तीक्ष्णेनोपक्र मेत शिरःशुद्ध्यर्थं । अनन्तरञ्च विदारिगन्धादिक्काथमांसरस क्षीरदधिपक्कं सर्पिरच्छं पाययेत् तथा हि नातिमात्रं वायुः प्रस रति । ततो भद्रदार्व्वादिवातघ्नगणमाहृत्य सयवकोलकुलत्थमानू पौदकमांसं पञ्चवर्गमेकतः प्रक्वाथ्य तमादाय कषायमम्लक्षीरैः सहोन्मिश्र्य सर्पिस्तैलवसामज्जभिः सह विपचेन्मधुरकप्रतीवापं तदे तन्नेहतमपतानकिनां परिषेकावगाहाभ्यङ्गपानभोजनानुवासनन

स्येषु विदध्यात्। यथोक्तैश्च स्वेदविधानैः स्वेदयेत्॥ बलीयसि वाते
सुखोष्णतुषबुसकरीषपूर्णे कूपे निदध्यादामुखात्॥ तप्तायां वाङ्गा
रचुल्ल्यां तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छ
न्नायां शाययेत्। कृशरावेशवारपायसैर्वा स्वेदयेत्॥

मूलकोरुबूकस्फूर्जार्जकार्कशमलाशङ्खिनीस्वरससिद्धं तैलमप
तानकिनां परिषेकादिषूपयोज्यं॥ अभुक्तवता पीतमम्लं दधिमरिच
वचायुक्तमपतानकं हन्ति तैलसर्पिर्वसाक्षौद्राणि च॥ एतच्छुद्ध
वातापतानकविधानमुक्तं संसृष्टे संसृष्टं कर्त्तव्यं। वेगान्तेषु चाव
पीडं दद्यात्॥ ताम्रचूडकर्कटकृष्णमत्स्यशिशुमारवराहवसाश्चा
सेवेत। क्षीराणि वा वातहरसिद्धानि यवकोलकुलत्थमूलकदधि
घृततैलसिद्धां वा यवागूं स्नेहविरेचनास्थापनानुवासनैश्चैनं दश
रात्राहतवेगमुपक्रमेत्॥ वातव्याधिचिकित्सितं चावेक्षेत रक्षा
कर्म्म च कुर्य्यादिति॥

पक्षाघातोपद्रुतमम्लानगात्रं सरुजमात्मवन्तमुपकरणवन्तं चोप
क्रमेत्॥तत्र प्रागेव स्नेहस्वेदोपपन्नं मृदुना शोधनेन संशोध्यानुवास्या
स्थाप्य च यथाकालमाक्षेपकविधानेनोपचरेत्। वैशेषिकश्चात्र
मस्तिष्कशिरोवस्तिश्चाणुतैलमभ्यङ्गार्थे शाल्वणमुपनाहार्थे बला
तैलमनुवासनार्थे। एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रिया
पथमुपसेवेत॥

मन्यास्तम्भेऽप्येतदेव विधानं विशेषतो वातश्लेष्महरैर्नस्यरूक्षस्वे
दैश्चोपचरेत्॥

अपतन्त्रकातुरं नापतर्पयेत् । वमनानुवासनास्थापनानि न निषेवेत ॥ वातश्लेष्मोपरुद्धोच्छ्वासं तीक्ष्णैः प्रधमनैर्मोचयेत् । तुम्बुरुपुष्कराह्वहिङ्गुम्लवेतसपथ्यालवणत्रयं यवक्वाथेन पातुं प्रयच्छेत् पथ्याशतार्द्धे सौवर्चलद्विपले चतुर्गुणे पयसि सर्पिःप्रस्थं सिद्धं वातश्लेष्मापनुच्च कर्म्म कुर्य्यात् ॥

अर्दितातुरं बलवन्तमुपकरणवन्तञ्च वातव्याधिविधानेनोपचरेद्वैशेषिकैश्च मस्तिष्कशिरोवस्तिनस्यधूमोपनाहस्नेहनाडीस्वेदादिभिः । ततः सतृणं महापञ्चमूलं काकोल्यादिं विदारिगन्धादिमौदकानूपमांसं तथैवौदककन्दांश्च संहृत्य द्विगुणोदके क्षीरद्रोणे निष्क्वाथ्य पादावशिष्टमवतार्य्य परिस्राव्य तैलप्रस्थेनोन्मिश्र्य पुनरग्नावधिश्रयेत् ततस्तैलं क्षीरानुगतमवतार्य्य शीतीभूतमभिमथ्नीयात्तत्र यः स्नेह उत्तिष्ठेत्तमादाय मधुरौषधसहाक्षीरयुक्तं विपचेदेतत्क्षीरतैलमर्दितातुराणां पानाभ्यङ्गादिषूपयोज्यं ॥
तैलहीनं वा क्षीरसर्पिरक्षितर्पणमिति ॥

गृध्रसीविश्वाचीक्रोष्टुकशिरःखञ्जपङ्गुलवातकण्टकपाददाहपादहर्षाववाहुकबाधिर्य्यधमनीगतवातरोगेषु यथोक्तं यथोद्देशञ्च सिराव्यधं कुर्य्यादन्यत्राववाहुकाद्वातव्याधिचिकित्सितं चावेक्षेत ॥

कर्णशूले तु शृङ्गवेररसं तैलमधुसंसृष्टं सैन्धवोपहितं सुखोष्णं कर्णे दद्यादजामूत्रं मधुतैलानि वा मातुलुङ्गदाडिमतिन्तिडीकस्वरसमूत्रसिद्धं तैलं शुक्तसुरातक्रमूत्रलवणसिद्धं वा ॥

नाडीस्वेदैश्च स्वेदयेत् । वातव्याधिचिकित्सां चावेक्षेत । भूयश्चो त्तरे वक्ष्यामः ॥

तूणीप्रतूण्योः स्नेहलवणमुदकेन पाययेत् पिप्पल्यादिचूर्णं वा हिङ्गुयवक्षारप्रगाढं वा सर्पिर्वस्तिभिश्चैनमुपक्रमेत् ॥

आध्माने त्वपतर्पणपाणितापदीपनचूर्णफलवर्त्तिक्रियापाचनीय वस्तिभिरुपचरेत्। लङ्घनानन्तरं चान्नकाले धान्यकजीरकादि दीपनसिद्धान्यन्नानि ॥ प्रत्याध्माने छर्दनापतर्पणदीपनानि कुर्य्यात्।

अष्ठीलाप्रत्यष्ठीलयोर्गुल्माभ्यन्तरविद्रधिवत्क्रियाविभाग इति॥

हिङ्गुत्रिकटुवचाजमोदाधन्याजगन्धादाडिमतिन्तिडीकपाठाचि त्रकयवक्षारसैन्धवविडसौवर्चलस्वर्जिकापिप्पलीमूलाम्लवेतसशठीपु ष्करमूलहपुषाचव्याजाजीपथ्याश्चूर्णयित्वा मातुलुङ्गाम्लेन बहुशः परिभाव्याक्षमात्रां गुटिकां कारयेत्ततःप्रातरेकैकां वातविकारी भक्षयेत् । अथैषयोगः कासश्वासगुल्मोदरारोचकहृद्रोगाध्मान पार्श्वोदरवस्तिशूलानाहमूत्रकृच्छ्प्लीहार्शस्तूणीप्रतूणीरपहन्ति ॥ भवन्ति चात्र ॥ केवलो दोषयुक्तो वा धातुभिर्व्वावृतोऽनिलः ।

विज्ञेयो लक्षणोहाभ्यां चिकित्सा वाऽविरोधतः॥

रुजावन्तं घनं शीतं शोफं मेदोयुतोऽनिलः ।

करोति यस्य तं वैद्यः शोथवत्समुपाचरेत्॥

कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते ।

तदाङ्गमर्दस्तैमित्यरोमहर्षरुजाज्वरैः ॥
निद्रया चार्दितौ स्तब्धौ शीतलावप्रचेतनौ ।
गुरुकावस्थिरावूरू न स्वाविव च मन्यते ॥
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ।
स्नेहवर्ज्जं पिबेत्तत्र चूर्णं षट्धरणं नरः ॥
हितमुष्णाम्बुना तद्वत्पिप्पल्यादिगणैः कृतं ।
लिह्याद्वा त्रैफलं चूर्णं चौद्रेण कटुकान्वितं ॥
मूत्रैर्व्वा गुग्गुलुं श्रेष्ठं पिबेद्वापि शिलाजतु ।
ततो हन्ति कफाक्रान्तं समेदस्कं प्रभञ्जनं ॥
हृद्रोगमरुचिं गुल्मं तथाभ्यन्तरविद्रधिं ।
सद्यागमूत्रस्वेदांश्च रूक्षाण्युत्सादनानि च ॥
कुर्य्यात्‌ दिह्याच मूत्राढ्यैः करञ्जफलसर्षपैः ।
भोज्याः पुराणश्यामाककोद्रवोद्दालशालयः ॥
शुष्कमूलकयूषेण पटोलस्य रसेन वा ।
जाङ्गलैरघृतैर्म्मांसैः शाकैश्चालवणैर्हितैः ॥
यदा स्यातां परिक्षीणे भूयिष्ठे कफमेदसी ।
तदा स्नेहादिकं कर्म्म पुनरत्रावचारयेत्‌ ॥
सुगन्धिः सुलघुः सूक्ष्मस्तीक्ष्णोष्णः कटुको रसः ।
कटुपाकः सरो हृद्यो गुग्गुलुः स्निग्धपिच्छिलः ॥
स नवो बृंहणो वृष्यः पुराणस्त्वपकर्षणः ।
तैक्ष्ण्यौष्ण्यात्कफवातघ्नः सरत्वान्मलपित्तनुत्‌ ॥

सौगन्ध्यात् पूतिकोष्ठघ्नः सौक्ष्म्याच्चानलदीपनः ।
तस्मात्त्रिफलादार्व्वीपटोलकुशवारिभिः ॥
पिबेदावाप्य वा मूत्रैः क्षारैरुष्णोदकेन वा ।
जीर्णे यूषरसक्षीरैर्भुञ्जानो हन्ति मासतः ॥
गुल्मं मेहमुदावर्त्तमुदरं सभगन्दरं ।
कृमिकण्डूहृचिश्वित्राण्यर्बुदग्रन्थिमेव च ॥
नाड्याढ्यवातश्वयथुकुष्ठदुष्टव्रणांश्च सः ।
कोष्ठसन्ध्यस्थिगं वायुं वृक्षमिन्द्राशनिर्यथा ॥

---

## ॥ षष्ठोऽध्यायः ॥

अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ॥

चतुर्व्विधोऽर्शसां साधनोपायः ॥ तद्यथा भेषजं क्षारोऽग्निः शस्त्रमिति तत्राचिरकालजातान्यल्पदोषलिङ्गोपद्रवाणि भेषजसाध्यानि मृदुप्रसृतावगाढान्युच्छ्रितानि क्षारेण । कर्कशस्थिरपृथुकठिनान्यग्निना । तनुमूलान्युच्छ्रितानि क्लेदवन्ति च शस्त्रेण । तत्र भेषजसाध्यानामर्शसामदृश्यानाञ्च भेषजं भवति क्षाराग्निशस्त्रसाध्यानान्तु विधानमुच्यमानमुपधारय ॥

तत्र बलवन्तमातुरमर्शोभिरुपद्रुतमुपस्निग्धं परिस्विन्नमनिलवेदनाभिवृद्धिप्रशमार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुपवेश्य सम्भृते शुचौ देशे साधारणे व्यभ्रे काले समे फलके

शय्यायां वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्व्वकायमुत्तानं किञ्चिदुन्नतकटिकं वस्त्रकम्बलकोपविष्टं यन्त्रशाटकेन परिक्षिप्त ग्रीवामक्थं परिकर्म्मिभिः सुपरिगृहीतमस्पन्दनशरीरं कृत्वा ततोऽस्मिन् घृताभ्यक्तं यन्त्रमृज्वणुमुखं पायौ शनैः शनैः प्रवाहमाणस्य प्रणिधाय प्रविष्टे चार्शो वीक्ष्य शलाकयोत्पीड्य पिचुवस्त्रयोरन्यतरेण प्रमृज्य चारं पातयेत् पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्छतमात्रमुपेचेत। ततः प्रमृज्य चारबलं व्याधिबलञ्चावेक्ष्य पुनरालेपयेत्। अथार्शः पक्वजाम्बवप्रतीकाशमभिसमीक्ष्यावमन्नमीषन्नतमुपावर्त्तयेत् ॥ चारं प्रचालयेद्धान्याम्लेन दधिमस्तुशुक्तफलाम्लैर्व्वा ततो यष्टीमधुकमिश्रेण सर्पिषा निर्व्वाप्य यन्त्रमपनीयोत्थाप्यातुरमुष्णोदकोपविष्टं शीताभिरद्भिः परिषिञ्चेदशीताभिरित्येके ॥ ततोनिर्व्वातमागारं प्रवेश्याचारिकमादिशेत् सावशेषं पुनर्द्दहेत्। एवं सप्तरात्रात्सप्तरात्रादेकैकमुपक्रमेत तत्र बहुषु पूर्व्वं दक्षिणं साधयेद्दक्षिणाद्वामं वामात्पृष्ठजं ततोऽग्रजमिति॥

तत्र वातश्लेष्मनिमित्तान्यग्निक्षाराभ्यां साधयेत् क्षारेणैव मृदुना पित्तरक्तनिमित्तानि। तत्र वातानुलोम्यमन्नरुचिरग्निदीप्तिर्लाघवं बलवर्णोत्पत्तिर्मनस्तुष्टिरिति सम्यग्दग्धलिङ्गानि॥ अतिदग्धे तु गुदावदरणं दाहोमूर्च्छा ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति॥ श्यामाल्पत्रणता कण्डूरनिलवैगुण्यमिन्द्रियाणामप्रसादो विकारस्य चाशान्तिर्हीनदग्धे॥

महान्तिच प्राणवतश्छित्त्वा दहेत् । निर्गतानि चात्यर्थं दोषपूर्णानि यन्त्रादिना स्वेदाभ्यङ्गस्नेहावगाहोपनाहविस्रावणलेपक्षाराग्निशस्त्रैरुपाचरेत् ॥ प्रवृत्तरक्तानि च रक्तपित्तविधानेन भिन्नपुरीषाणि चातीसारविधानेन बद्धवर्चांसि स्नेहपानविधाने नोदावर्त्तविधानेन वा । एष सर्व्वस्थानगतानामर्शसां दहनकल्पः ॥

आसाद्य च दर्व्वीकूर्चकशलाकानामन्यतमेन क्षारं पातयेत् ॥ भ्रष्टगुदस्य तु विना यन्त्रेण क्षारादिकर्म्म प्रयुञ्जीत सर्व्वेषुच शालिषष्टिकयवगोधूमान्नं सर्पिःस्निग्धमुपसेवेत पयसा निम्बयूषेण पटोलयूषेण वा यथादोषशाकैर्वास्तूकतण्डुलीयकजीवन्त्युपोदिकाश्वबलाबालमूलकपालङ्क्यसुनिषण्णचिल्लीचुञ्चूकलायवल्लीभिरन्यैर्व्वा ॥ यच्चान्यदपि स्निग्धमग्निदीपनमर्शोघ्नं सृष्टमूत्रपुरीषञ्च तदुपसेवेत ॥

दग्धेषु चार्शस्स्वभ्यक्तोऽनलसन्धुक्षणार्थमनिलप्रकोपसंरक्षणार्थञ्च स्नेहादीनां सामान्यतो विशेषतस्तु क्रियापथमुपसेवेत॥ सर्पींषि च दीपनीयवातहरसिद्धानि हिङ्ग्वादिभिश्चूर्णैः प्रतिसंसृज्य पिबेत्॥ पित्तार्शस्सु पृथक्पर्ण्यादीनां कषायेण दीपनीयप्रतीवापं भद्रदार्व्वादिपिप्पल्यादिसर्पिः ॥ शोणितार्शस्सु मञ्जिष्ठामुस्ताद्यादीनां कषाये श्लेष्मार्शस्सु सुरसादीनां कषाये सर्पिः । उपद्रवांश्च यथास्वमुपचरेत् ॥

परञ्च यत्नमास्थाय गुदे क्षाराग्निशस्त्राण्यवचारयेत्तद्विभ्रमाद्धि षाण्ड्यशोफदाहमदमूर्च्छाटोपानाहातीसारप्रवाहणानि

भवन्ति मरणं वा ॥

अतऊर्द्धं यन्त्रप्रमाणमुपदेक्ष्यामः ॥

तत्र यन्त्रं लौहं दान्तं शार्ङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं पञ्चाङ्गुलपरिणाहं पुंसां षडङ्गुलपरिणाहं नारीणां तलायतं तद्विच्छिद्रं दर्शनार्थमेकं छिद्रमेकं छिद्रन्तु कर्म्मणि। एकद्वारे हि शस्त्रक्षाराग्नीनामतिक्रमो न भवति ॥ छिद्रप्रमाणन्तु त्र्यङ्गुलायतमङ्गुष्ठोदरपरिणाहं यदङ्गुलमवशिष्टं तस्यार्द्धाङ्गुलमधस्तादर्द्धाङ्गुलोच्छ्रितोपरि वृत्तकर्णिकमेष यन्त्राकृतिसमासः ॥

अतऊर्द्धमर्शसामालेपान्वक्ष्यामः ॥ स्नुहीक्षीरयुक्तं हरिद्राचूर्णमालेपः प्रथमः ॥ कुक्कुटपुरीषगुञ्जाहरिद्रापिप्पलीचूर्णमिति गोमूत्रपित्तपिष्टो द्वितीयः ॥ दन्तीचित्रकसुवर्चिकालाङ्गलीकल्को वा गोपित्तपिष्टस्तृतीयः ॥ पिप्पलीसैन्धवकुष्ठशिरीषफलकल्कः स्नुहीक्षीरपिष्टोऽर्कक्षीरपिष्टो वा चतुर्थः ॥ कासीसहरितालसैन्धवाश्वमारकविडङ्गपूतीककृतवेधनजम्ब्वर्कोत्तमारणीदन्तीचित्रकालर्कस्नुहीपयःसु तैलं विपक्वमभ्यञ्जनेनार्शः शातयति ॥

अतऊर्द्धमदृश्येष्वर्शस्सु योगान्पातनार्थं वक्ष्यामः॥ प्रातः प्रातर्गुडहरीतकीमासेवेत ॥ ब्रह्मचारी गोमूत्रद्रोणसिद्धं वा हरीतकीशतं प्रातःप्रातर्यथाबलमुपयुञ्जीत क्षौद्रेण ॥ अपामार्गमूलं वा तण्डुलोदकेन सक्षौद्रमहरहः ॥ शतावरीमूलकल्कं वा क्षीरेण ॥ चित्रकचूर्णयुक्तं वा सीधुपराद्ध्यं ॥ भल्लातचूर्णयुक्तं वा सक्तुमन्थमल

वणं तक्रेण ॥ कलशेवान्तश्चित्रकमूलकल्कावलिप्ते निषिक्तं तक्रम म्लमनम्लं वा पानभोजनेषूपयुञ्जीत । एष एव भार्ग्यास्फोताय वान्यामलकगुडूचीषु तक्रकल्पः ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकविडङ्गशुण्ठीहरीतकीषु च पूर्व्ववदेव निरन्नो वा तक्रमहरहर्मासमुपसेवेत ॥ शृङ्गवेरपुनर्नवाचित्रककषायसिद्धं वा पयः ॥ कुटजमूलत्वक्फाणितं वा पिप्पल्यादिप्रतीवापं चौद्रेण ॥ वातघ्नाभ्युक्तं हिङ्ग्वादिचूर्णमुपसेवेत तक्राहारः क्षीराहारो वा ॥ चारलवणांश्चित्रकमूलचारोदकसिद्धान्वा कुल्माषान्भक्षयेत् ॥ चित्रकमूलचारोदसिद्धं वा पयः ॥ पलाशतरुचारसिद्धान्वा कुल्माषान् ॥ पाटलापामार्गवृहतीपलाशचारं वा परिस्रुतमहरहर्घृतसंसृष्टं ॥ कुटजवन्दाकीमूलकल्कं वा तक्रेण ॥ चित्रकपूतीकनागरकल्कं वा पूतीकचारेण चारोदकसिद्धं वा सर्पिः पिप्पल्यादिप्रतीवापं॥कृष्णतिलप्रसृतं प्रकुञ्चं वा प्रातः प्रातरनुसेवेत शीतोदकानुपानं। एभिरभिवर्द्धतेऽग्निरर्शांसि चोपशाम्यन्ति॥

द्विपञ्चमूलीदन्तीचित्रकपथ्यानां तुलामाहृत्यजलचतुर्द्रोणे विपाचयेत् । ततः पादावशिष्टं कषायमादाय सुशीतं गुडतुलया सहोन्मिश्र्य घृतभाजने निःक्षिप्य मासमुपेक्षेत यवपल्ले ततः प्रातः प्रातर्मात्रां पाययेत तेनार्शोग्रहणीदोषपाण्डुरोगोदावर्त्तारोचका न भवन्ति दीप्तोऽग्निश्च भवति ॥ पिप्पलीमरिचविडङ्गैलवालुकलोध्राणां द्वे द्वे पले इन्द्रवारुण्याः पञ्च पलानि कपित्थमध्यस्य दश पथ्याफलानामर्द्धप्रस्थः प्रस्थो धात्रीफलानामेतदेकध्यं जलचतुर्द्रोणे

विपाच्य पादावशेषं परिस्राव्य सुशीतं गुडतुलाद्वयेनाभिमिश्र्य घृतभाजने निःक्षिप्य पक्षमुपेक्षेत यवपल्ले ततः प्रातः प्रातर्यथाबलमुपयुञ्जीत। एष खल्वरिष्टः प्लीहाग्निसङ्गार्शोग्रहणीहृत्पाण्डुरोगशोफकुष्ठगुल्मोदरकृमिहरो बलवर्णकरश्चेति॥

तत्र वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमप्रतिषिद्धं॥ पित्तजेषु विरेचनं॥ एवं रक्तजेषु संशमनं॥ कफजेषु शृङ्गवेरकुलत्थोपयोगः। सर्व्वदोषहरं यथोक्तं सर्व्वजेषु यथास्वौषधसिद्धं वा पयः सर्व्वेष्विति॥

अत ऊर्द्ध्वं भल्लातकविधानमुपदेक्ष्यामः॥ भल्लातकानि परिपक्वान्यनुपहतान्याहृत्यैकमादाय द्विधा त्रिधा चतुर्द्धा वा छेदयित्वा कषायकल्पेन विपाच्य कषायस्य शुक्तिमनुष्णां घृताभ्यक्ततालुजिह्वौष्ठः प्रातः प्रातरुपसेवेत ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहार एवमेकैकं वर्द्धयेत्तावद्यावत्पञ्चेति ततः पञ्च पञ्चाभिवर्द्धयद्यावत्सप्ततिरिति प्राप्य च सप्ततिमपकर्षयेद्भूयः पञ्च पञ्च यावत्पञ्चेति पञ्चभ्यश्चैकैकं यावदेकमिति। एवं भल्लातकसहस्रमुपयुज्य सर्व्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायुर्भवति॥

द्विव्रणीयोक्तेन विधानेन भल्लातकनिश्चुतितं स्नेहमादाय प्रातः प्रातः शुक्तिमात्रमुपयुञ्जीत जीर्णे पूर्व्ववदाहारः फलप्रकर्षश्च॥ भल्लातकमज्जभ्यो वा स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तो निवातमागारं प्रविश्य यथाबलं प्रसृतिं प्रकुञ्चं चोपयुञ्जीत॥ तस्मिन् जीर्णे क्षीरं सर्पिरोदन इत्याहारः॥ एवं मासमुपयुज्य मासत्रय

मादिष्टाहारो रक्षेदात्मानं ॥ ततः सर्व्वोपतापानपहृत्य वर्णवान्बलवान् श्रवणग्रहणधारणशक्तिसम्पन्नो वर्षशतायुर्भवति। मासे मासे च प्रयोगे वर्षशतं वर्षशतमायुषोऽभिवृद्धिर्भवति। एवं दशमासानु पयुज्य वर्षसहस्रायुर्भवति ॥

भवन्ति चात्र॥ यथा सर्व्वाणि कुष्ठानि हतः खदिरवीजकौ।
तथैवार्शांसि सर्व्वाणि वृत्तकारुष्करौ हतः ॥
असाध्या नातिवर्त्तन्ते प्रमेहा रजनीं यथा।
क्षाराग्निनातिवर्त्तन्ते तथा दुश्या गुदोद्भवाः ॥
घृतानि दीपनीयानि लेहायस्कृतयः सुराः।
आसवाश्च प्रयोक्तव्या वीक्ष्य दोषसमुच्छ्रितिम्॥
वेगावरोधस्त्रीपृष्ठयानान्युत्कटुकासनं।
यथास्वन्दोषलं चान्नमर्शःसु परिवर्जयेत् ॥

---

॥ सप्तमोऽध्यायः ॥

अथातोऽश्मरीचिकित्सितं व्याख्यास्यामः ॥
अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः।
औषधैस्तरुणः साध्यः प्रवृद्धश्छेदमर्हति ॥
तस्य पूर्व्वेषु रूपेषु स्नेहादिक्रम इष्यते।
तेनास्यापचयं यान्ति व्याधेर्मूलान्यशेषतः ॥
पाषाणभेदो वसुको वशिराश्मन्तकौ तथा।
शतावरी श्वदंष्ट्रा च वृहती कण्टकारिका ॥

कपोतवङ्कार्त्तगलः ककुभोशीरकुब्जकः।
वृचादनी भल्लुकश्च वरुणः शाकजं फलं॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च।
ऊषकादिप्रतीवापमेषां कार्य्यं घृतं शृतं ॥
भिनत्ति वातसंभूतामश्मरीं चिप्रमेव तु।
चारान्यवागूर्यूषांश्च कषायाणि पयांसि च॥
भोजनानि च कुर्वीत वर्गेऽस्मिन्वातनाशने।
कुशः काशः शरो गुन्द्रा उत्कटो मोरटोऽश्मभित्॥
वरी विदारी वाराही शालिमूलत्रिकण्टकं।
भल्लूकः पाटला पाठा पत्तूरोऽथ कुरुण्टिका॥
पुनर्नवा शिरीषश्च क्वथितास्तेषु साधितं।
घृतं शिलाजमधुकवीजैरिन्दीवरस्य च॥
त्रपुसैर्वारुकादीनां वीजैश्चावापितं शुभं।
भिनत्ति पित्तसम्भूतामश्मरीं चिप्रमेव तु॥
चारान्यवागूर्यूषांश्च कषायाणि पयांसि च।
भोजनानि च कुर्वीत वर्गेऽस्मिन् पित्तनाशने॥
गणो वरुणकादिस्तु गुग्गुल्वेलाहरेणवः।
कुष्ठभद्रादिमरिचचित्रकैः ससुराह्वयैः॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च।
भिनत्ति कफसंभूतामश्मरीं चिप्रमेव तु
चारान्यवागूर्यूषांश्च कषायाणि पयांसि च।

भोजनानि च कुर्वीत वर्गेऽस्मिन् कफनाशने ॥
पिचुकाङ्कोलकतकशाकेन्दीवरजैः फलैः ।
चूर्णितैः सगुडं तोयं शर्कराशमनं पिबेत् ॥
क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालमूलिका ।
अजमोदा कदम्बस्य मूलं नागरमेव च ॥
पीतानि शर्करां भिन्द्युः सुरयोष्णोदकेन वा ।
त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतं ॥
अविक्षीरेण सप्ताहमश्मरीभेदनं पिबेत् ।
द्रव्याणान्तु घृतोक्तानां क्षारोऽवीमूत्रगालितः ॥
ग्राम्यसत्वशकृत्क्षारैः संयुक्तः साधितः शनैः ।
तत्रोषकादिरावापः कार्य्यस्त्रिकटुकान्वितः ॥
एष क्षारोऽश्मरीं गुल्मं शर्कराञ्च भिनत्त्यपि ।
तिलापामार्गकदलीपलाशयववल्कजः ॥
क्षारःपेयोऽविमूत्रेण शर्करानाशनः परः ।
पाटलाकरवीराणां क्षारमेवं समाचरेत् ॥
श्वदंष्ट्रायष्टिकाब्राह्मीकल्कं वाक्षसमं पिबेत् ।
सहैडकाख्यौ पेयौ वा शोभाञ्जनकमार्कवौ ॥
कपोतवङ्कामूलं वा पिबेदम्लसुरादिभिः ।
तत्सिद्धं वा पिबेत्क्षीरं वेदनाभिरुपद्रुतः ॥
हरीतक्यादिसिद्धं वा वर्षाभूसिद्धमेव वा ।
सर्व्वथैवोपयोज्यः स्यात्क्रमो वीरतरादिकः ॥

घृतैः चारैः कषायैश्च चीरैः सोत्तरवस्तिभिः।
यदि नोपशमं गच्छेच्छेदस्तत्रोत्तरो विधिः॥
कुशलस्यापि वैद्यस्य यतः सिद्धिरिहाध्रुवा।
उपक्रमो जघन्योऽयमतः स परिकीर्त्तितः॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत्।
तस्मादापृच्छ्य कर्त्तव्यमीश्वरं साधुकारिणा॥

अथ रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तस्विन्न शरीरं भुक्तवन्तं हृतबलिमङ्गलस्वस्तिवाचनमग्रोपहरणीयोक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य ततो बलवन्तमविक्लवमाजानु समे फलके प्रागुपवेश्य पुरुषञ्च तस्योत्सङ्गे निषण्णपूर्व्वकायमुत्तानमुन्नतकटीकं वस्त्रधारकोपविष्टं सङ्कुचितजानुकूर्परमितरेण सहावबद्धं सूत्रेण शाटकैर्व्वा ततः स्वभ्यक्तनाभिप्रदेशस्य वामपार्श्वं विमृद्य मुष्टिनावपीडयेदधोनाभेर्य्यावदश्मर्य्यधः प्रपन्नेति। ततः स्नेहाभ्यक्ते कृत्तनखे वामहस्तप्रदेशिनीमध्यमे पायौ प्रणिधायानुसेवनीमासाद्य प्रयत्नबलाभ्यां पायुमेढ्रान्तरमानीय निर्व्वलीकमनायतमविषमञ्च वस्तिं सन्निवेश्य भृशमुत्पीडयेदङ्गुलिभ्यां यथा ग्रन्थिरिवोन्नतं शल्यं भवति॥

सचेद्गृहीतशल्ये तु विवृताक्षो विचेतनः।
हतवल्लम्बशीर्षश्च निर्व्विकारो मृतोपमः॥
न तस्य निर्हरेच्छल्यं निर्हरेत्तु म्रियेत सः।
विनालेतेषु रूपेषु निर्हर्त्तुं समुपाचरेत्॥

सव्ये पार्श्वे सेवनीं यवमात्रेण मुक्त्वावचारयेत् शस्त्रमश्मरी
प्रमाणं दक्षिणतो वा क्रियासौकर्य्यहेतोरित्येके ॥ यथा च न
भिद्यते चूर्ण्यते वा तथा प्रयतेत चूर्णमल्पमप्यवस्थितं हि पुनः
परिवृद्धिमेति तस्मात्समस्तामग्रवक्रेणाददीत ॥ स्त्रीणान्तु वस्ति
पार्श्वगतो गर्भाशयः सन्निकृष्टः तस्मात्तासामुत्सङ्गवच्छस्त्रं पात
येदतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवेत् ॥ पुरुषस्य वा
मूत्रप्रसेकक्षणनान्मूत्रक्षरणं ॥ अश्मरी व्रणादृते भिन्नो वस्तिरे
कधा न भवति द्विधा भिन्नवस्तिराश्मरिको न सिध्यति ॥
अश्मरीव्रणनिमित्तमेकधाभिन्नवस्तिर्जीवति क्रियाभ्यासात् शास्त्र
विहितच्छेदान्निःस्यन्दपरिवृद्धत्वाच्च शल्यस्येति । उद्धृतशल्यं
तूष्णोदकद्रोण्यामवतार्य्य स्वेदयेत्तथाहि वस्तिरसृजा न पूर्य्यते
पूर्णे वा क्षीरवृक्षकषायं पुष्पनेत्रेण विदध्यात् ॥

भवति चात्र ॥ क्षीरवृक्षकषायन्तु पुष्पनेत्रेण योजितं ।
निर्हरेदश्मरीं चूर्णं रक्तं वस्तिगतञ्च यत् ॥

मूत्रमार्गविशोधनार्थं चास्मै गुडसौहित्यं वितरेत् ॥ उद्धृत्य
चैनां मधुघृताभ्यक्तव्रणं मूत्रविशोधनद्रव्यसिद्धामुष्णां सघृतां य
वागूं पाययेदुभयकालं त्रिरात्रं त्रिरात्रादूर्द्ध्वं गुडप्रगाढेन पयसा
मृद्वोदनमल्पं भोजयेद्दशरात्रं मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेद
नार्थञ्च दशरात्रादूर्द्ध्वं फलाम्लैर्जाङ्गलरसैरुपाचरेत् ॥ ततो दश
रात्रं चैनमप्रमत्तः स्वेदयेत् स्नेहेन द्रवस्वेदेन वा ॥ क्षीरवृक्ष
कषायेण वास्य व्रणं प्रक्षालयेत् ॥ रोध्रमधुकमञ्जिष्ठाप्रपौण्डरीक

अङ्कोठवीजकुसुमं गतिषु प्रयोज्यं
लाचोदकाक्तमलासु विकृत्य चूर्णं ॥
चूर्णीकृतैरथ विमिश्रितमेभिरेव
तैलप्रयुक्तमचिरेण गतिं निहन्ति ।
एष्वेव मूत्रसहितेषु विधाय तैलं
तत्साधितं गतिमपोहति सप्तरात्रात् ।
पिण्डीतकस्य तु वराहविभावितस्य
मूलेषु कन्दशकलेषु च सौवहेषु ॥
तैलं कृतं गतिमपोहति शीघ्रमेत
त्कन्देषु चामरवरायुधसाङ्कयेषु ।
भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च ॥
स्तन्ये गते विकृतिमाशु भिषक्तु धात्रीं
पीतां घृतं परिणतेऽहनि वामयेत्तु ।
निम्बोदकेन मधुमागधिकायुतेन
वान्तागतेऽहनि च मुद्गरसाशना स्यात् ॥
एवं त्र्यहं चतुरहं षडहं वमेद्वा
सर्पिः पिवेत्त्रिफलया सह संयुतं वा ।
भार्गीं वचामतिविषां सुरदारु पाठां

मुस्तादिकं मधुरसां कटुरोहिणीञ्च ॥
धात्रीं पिवेत्तु पयसः परिशोधनार्थ
मारग्वधादिषु वरं मधुना कषायं।
सामान्यमेतदुपदिष्टमतोविशेषा
द्दोषान्पयोनिपतितान् शमयेद्यथास्वं ॥
रोगं स्तनोत्थितमवेक्ष्य भिषग्विदध्या
द्यद्विद्रधावभिहितं बहुशो विधानं।
सम्पच्यमानमपि तन्तु विनोपनाहैः
सम्भोजनेन खलु पाचयितुं यतेत ॥
शीघ्रं स्तनोहि मृदुमांसतयोपनद्धः
सर्व्वं प्रकोथमुपयात्यवदीर्य्यते च।
पक्के च दुग्धहरिणीः परिहृत्य नाडीः
कृष्णञ्च चूचुकयुगं विदधीत शस्त्रं ॥
आमे विदाहिनि तथैव गते च पाकं
धात्र्याः स्तनौ सततमेव च निर्द्दहीत ॥

---

॥ अष्टादशोऽध्यायः ॥

अथातो ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितं व्याख्यास्यामः ॥
ग्रन्थिष्वथामेषु भिषग्विदध्याच्छोफक्रियायां विहितं विधिज्ञः।
रक्षेद्बलं चापि नरस्य नित्यं तत्रचितं व्याधिबलं निहन्ति ॥
तैलं पिवेत्सर्पिरथो दयं वा दत्वा वसां वा त्रिवृतं विदध्यात्।

अपेहिवाताद्दशमूलसिद्धं वैद्यश्चतुःस्नेहमथो द्वयं वा ॥
हिंस्राथ रोहिण्यमृताथ भार्गी श्योनाकविल्वागुरुकृष्णगन्धाः।
गोजी च पिष्टा सहतालपत्र्या ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥
स्वेदोपनाहान्विविधांश्च कुर्य्यात्तथा प्रसिद्धानपरांश्च लेपान्।
विदार्य्य वा पक्वमपोह्य पूयं प्रक्षाल्य विल्वार्कनरेन्द्रतोयैः ॥
तिलैः सपञ्चाङ्गुलपत्त्रमिश्रैः संशोधयेत्सैन्धवसम्प्रयुक्तैः।
शुद्धं व्रणं वाप्युपरोपयेयुस्तैलेन रास्नासरलान्वितेन ॥
विडङ्गयष्टीमधुकामृताभिः सिद्धेन वा क्षीरसमन्वितेन।
जलौकसः पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनं च ॥
काकोलिवर्गस्य च शीतलानि पिबेत्कषायाणि सशर्कराणि।
द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिबेच्चापि हरीतकीनां ॥
मधूकजम्ब्वर्ज्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेत ।
सशर्क्करैर्व्वा तृणशून्यकन्दैर्दिह्यादभीक्ष्णं मुचुकुन्दजैर्व्वा ॥
विदार्य्य वा पक्वमपोह्य पूयं धावेत्कषायेण वनस्पतीनां।
तिलैः सयष्टीमधुकैर्व्विशोध्य सर्पिः प्रयोज्यं मधुरैर्व्विपक्वं ॥
हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु।
स्विन्नस्य विम्लापनमेव कुर्य्यादङ्गुष्ठलोहोपलवेणुदण्डैः ॥
विकङ्कतारग्वधकाकनन्तीकाकादनीतापसवृक्षमूलैः।
आलेपयेत्पिण्डफलार्कभार्ग्गीकरञ्जकालामदनैश्च विद्वान् ॥
अमर्म्मजातं शममप्रयातमपक्वमेवापहरेद्विदार्य्य।
दहेत्स्थिते वासृजि सिद्धकर्म्मा सद्यःक्षताक्तञ्च विधिं विदध्यात् ॥

या मांसकन्द्यः कठिना वृहत्यस्ताश्चैव योज्यश्च विधिर्व्विधिज्ञैः।
शस्त्रेण वापाद्य सुपक्वमाशु प्रक्षालयेत्पथ्यतमैः कषायैः ॥
संशोधनैस्तञ्च विशोधयेयुः क्षारोत्तरैः क्षौद्रघृतप्रगाढैः।
शुद्धे च तैलं लवचारणीयं विडङ्गपाठारजनीविपक्वं ॥
मेदःसमुत्थे तिलकल्कदिग्धं दलापरिष्टाद्द्विगुणं पटान्तं।
कृताशतप्तेन मुहुः प्रमृज्याल्लोहेन धीमान्दहनं हिताय ॥
प्रलिप्य दार्व्वीमथ लाक्षया वा प्रतप्तया स्वेदनमस्य कार्य्यं।
निपात्य वा शस्त्रमपोह्य मेदो दहेत्सुपक्वन्त्वथ वा विदार्य्यं ॥
प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः सुवर्च्चिकाद्यैर्हरितालमिश्रैः।
ससैन्धवैः क्षौद्रघृतप्रगाढैः क्षारोत्तरैरेनमभिप्रशोध्य ॥
तैलं विदध्याद्द्विकरञ्जगुञ्जावंशावलेखेङ्गुदमूत्रसिद्धं।
जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृतासु चैव ॥
सर्पिः कृतं हन्त्यपचीं प्रवृद्धां द्विधाप्रवृत्तं तदुदाग्वीर्य्यं।
निर्गुण्डिजातीवरिहिष्टयुक्तं जीमूतकं माक्षिकसैन्धवाढ्यं ॥
अभिप्रतप्तं वमनं प्रगाढं दुष्टापचीषूत्तममादिशन्ति।
कैटर्य्यविम्बीकरवीरसिद्धं तैलं हितं मूर्द्धविरेचनञ्च ॥
शाखोटकस्य स्वरसेन सिद्धं तैलं हितं नस्यविरेचनेषु।
मधूकसारश्च हितोऽवपीडे फलानि शिग्रोः खरमञ्जर्य्या ॥
ग्रन्थीनमर्मप्रभवानपक्वानुद्धृत्य चाग्निं विदधीत पश्चात्।
क्षारेण वापि प्रतिसारयेत्तु संलिख्य शस्त्रेण यथोपदेशं ॥
पार्ष्णिं प्रति द्वादशचाङ्गुलानि भित्त्वेन्द्रवस्तिं परिवर्ज्य धीमान्।

विदार्य्य मत्स्याण्डनिभानि वैद्यो निःकृष्य जालान्यनलं विदध्यात् ॥
आगुल्फकर्णात्सुमितस्य जन्तोस्तस्याष्टभागं खुलकाद्विभज्य ।
घोणर्जुवेधः सुरराजवस्तौर्हित्वा द्विमात्रं त्वपरे वदन्ति ॥

मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक् ।
अङ्गुल्यन्तरितं सम्यगपचीनां निवृत्तये ॥

चूर्णस्य काले प्रचलाककाकगोधाहिकूर्म्मप्रभवां मसीन्तु ।
दद्याच्च तैलेन सहेङ्गुदीनां यद्दच्यते श्लीपदिनाञ्च तैलं ॥
विरेचनं धूममुपाददीत भवेच्च नित्यं यवमुद्गभोजी ।
कर्क्कारुकैर्व्वारुकनारिकेरपियालपञ्चाङ्गुलवीजचूर्णैः ॥
वातार्व्वुदं चीरघृताम्बुसिद्धैरुष्णः सतैलैरुपनाहयेत्तु ।
कुर्य्याच्च मुख्यान्युपनाहनानि सिद्धैश्च मांसैरथ वेसवारैः ॥
स्वेदं विदध्यात्कुशलस्तु नाड्या शृङ्गेन रक्तं बहुशो हरेच्च ।
वातघ्ननिर्यूहपयोऽम्लभागैः सिद्धं शताख्यं त्रिवृतं पिबेद्वा ॥
स्वेदोपनाहा मृदवस्तु पथ्याः पित्तार्व्वुदे कायविरेचनञ्च ।
विघृष्य चोडुम्बरशाकगोजीपत्रैर्भृशं चौद्रयुतैः प्रलिम्पेत् ॥
श्लक्ष्णीकृतैः सर्जरसप्रियङ्गुपत्तङ्गरोध्राञ्जनयष्टिकाह्वैः ।
विस्राव्य चारग्वधगोजिसोमाः श्यामा च योज्या कुशलेन लेपे ॥
श्यामागिरिह्वाञ्जनकीरसेषु द्राक्षारसे सप्तलिकारसे च ।
घृतं पिबेत्क्षीतकसंप्रसिद्धं पित्तार्व्वुदी तज्जठरी च जन्तुः ॥
शुद्धस्य जन्तोः कफजेऽर्व्वुदे तु रक्तेऽवसिक्ते तु ततोऽर्व्वुदं तत् ।
द्रव्याणि यान्यूर्द्धमधश्च दोषान्हरन्ति तैः कल्कृतैः प्रदिह्यात् ॥

कपोतपारावतविड्विमिश्रैः सकांस्यनीलैः शुकलाङ्गलाख्यैः ।
मूत्रैस्तु काकादनिमूलमिश्रैः क्षारप्रदिग्धैरथ वा प्रदिह्यात् ॥
निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमस्तुयुक्तैः ।
लेपं विदध्यात् कृमयो यथात्र मूर्छन्ति मूर्छन्त्यथ मक्षिकाश्च ॥
अल्पावशिष्टे कृमिभिः क्षते च लिखेत्ततोऽग्निं विदधीत पश्चात् ।
यदल्पमूलं त्रपुताम्रसीसपट्टैः समावेष्ट्य तदायसैर्वा ॥
क्षाराग्निशस्त्राण्यसकृद्विदध्यात्प्राणानहिंसन् भिषगप्रमत्तः ।
आस्फोतजातीकरवीरपत्रैः कषायमिष्टं व्रणशोधनार्थं ॥
शुद्धे च तैलं विदधीत भार्गीविडङ्गपाठात्रिफलाविपक्वं ।
यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्विधिज्ञः ॥
मेदोऽर्बुदं स्विन्नमथो विदार्य्य विशोध्य सीव्येद्गतरक्तमाशु ।
ततो हरिद्रागृहधूमरोध्रपत्तङ्गचूर्णैः समनःशिलालैः ॥
व्रणं प्रतिशाद्य मधुप्रगाढैः करञ्जतैलं विदधीत शुद्धे ।
सशेषदोषाणि हि योऽर्बुदानि करोति तान्याशु पुनर्भवन्ति ॥
तस्मादशेषाणि समुद्धरेत्तु हन्युः सशेषाणि यथाहि वह्निः ।
संस्वेद्य गण्डं पवनोत्थमादौ नाड्यानिलघ्नौषधपत्रभङ्गैः ॥
अम्लैः समूत्रैर्विविधैः पयोभिरुष्णैः सतैलैः पिशितैश्च विद्वान् ।
विस्रावयेत्स्विन्नमतन्द्रितश्च शुद्धं व्रणं चाप्युपनाहयेत्तु ॥
शणातसीमूलकशिग्रुकिण्वप्रियालमज्जानुयुतैस्तिलैस्तु ।
कालामृताशिग्रुपुनर्नवार्कगजादिनामाकरहाटकुष्ठैः ॥
एकैषिकाहृत्वकतिल्वकैश्च सुराम्लपिष्टैरसकृद्दिदिह्यात् ॥

तैलं पिबेच्चामृतवल्लिनिम्बहंसाह्वयावृक्षकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगे ॥
स्वेदोपनाहैः कफसम्भवन्तु संस्वेद्य विस्रावणमेव कुर्य्यात् ।
ततोऽजगन्धातिविषाविशल्याविषाणिकाकुष्ठशुकाह्वयाभिः ॥
पलाशभस्मोदकपेषिताभिर्दिह्यात्सगुञ्जाभिरशीतलाभिः ।
दशार्द्धसङ्ख्यैर्लवणैश्च युक्तं तैलं पिबेन्मागधिकादिसिद्धं ॥
प्रच्छर्दनं मूर्द्धविरेचनञ्च धूमश्च वैरेचनिको हितस्तु ।
पाकक्रमोवापि सदाविधेयो वैद्येन पाकं गतयोः कथञ्चित् ॥
कटुत्रिकक्षौद्रयुताः समूत्रा भक्ष्या यवान्नानि रसाश्च मौद्गाः ।
सशृङ्गवेराः सपटोलनिम्बा हिताय देया गलगण्डरोगे ॥
मेदःसमुत्थे तु यथोपदिष्टां विध्येत्सिरां स्निग्धतनोर्नरस्य ।
श्यामासुधालोहपुरीषदन्तीरसाञ्जनैश्चापि हितः प्रदेहः ॥
मूत्रेण वालोड्य हिताय सारं प्रातः पिबेच्छालमहीरुहाणां ।
शस्त्रेण वापाद्य विदार्य चैनं मेदः समुद्धृत्य हिताय सीव्येत् ॥
मज्जाज्यमेदोमधुभिर्द्दहेद्वा दग्धे च सर्पिर्मधु चावचार्य्यं ।
कासीसतुल्ये च ततोऽत्र देये चूर्णीकृते रोचनया समेते ।
तैलेन चाभ्यज्य हिताय दद्यात्सारोद्भवं गोमयजञ्च भस्म ॥
हितश्च नित्यं त्रिफलाकषायो गाढश्च बन्धो यवभोजनञ्च ॥

---

॥ एकोनविंशोऽध्यायः ॥

अथातो वृद्ध्युपदंशश्लीपदानां चिकित्सितं व्याख्यास्यामः ॥

अन्त्रवृद्धिं विना घव्या वृद्धयस्तासु वर्जयेत् ।
अश्वादियानं व्यायामं मैथुनं वेगनिग्रहं ॥
अत्यासनं चङ्क्रमणमुपवासं गुरूणि च ।
तत्रादितो वातवृद्धौ स्नेहतस्निग्धमातुरं ॥
स्विन्नं चैनं यथान्यायं पाययेत विरेचनं ।
कोशाम्रतिल्वकैरण्डफलतैलानि वा नरं ॥
सक्षीरं वा पिबेन्मासं तैलमेरण्डसम्भवं ।
ततः कालेऽनिलघ्नानां क्वाथैः कल्कैश्च बुद्धिमान् ।
निरूहयेन्निरूढञ्च भुक्तवन्तं रसौदनं ॥
यष्टीमधुकसिद्धेन ततस्तैलेन योजयेत् ।
स्नेहोपनाहौ कुर्य्याच्च प्रदेहांश्चानिलापहान् ॥
विदग्धां पाचयित्वा वा सेवनीं परिवर्जयेत् ॥
भिन्द्यात्ततः प्रभिन्नायां यथोक्तं क्रममाचरेत् ।
पित्तजायामपक्वायां पित्तग्रन्थिक्रमो हितः ॥
पक्वां वा भेदयेद्भिन्नां शोधयेत्क्षौद्रसर्पिषा ।
शुद्धायाञ्च भिषग्दद्यात्तैलं कल्कञ्च रोपणं ॥
रक्तजायां जलौकोभिः शोणितं निर्हरेद्भिषक् ।
पिबेद्विरेचनं वापि शर्कराक्षौद्रसंयुतं ।
पित्तग्रन्थिक्रमं कुर्य्यादामे पक्वे च सर्व्वदा ॥

वृद्धिं कफात्मिकामुष्णैर्मूत्रपिष्टैः प्रलेपयेत् ।
पीतदारुकषायञ्च पिबेन्मूत्रेण संयुतं ॥
विम्लापनादृते वापि श्लेष्मग्रन्थिक्रमो हितः ।
पक्वायाञ्च विभिन्नायां तैलं शोधनमिष्यते ॥
सुमनारुष्करांकोठसप्तपर्णेषु साधितं ।
मेदःसमुत्थां संस्वेद्य लेपयेत्सुरसादिना ॥
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ।
स्विन्नां चाविेष्ट्य पट्टेन समाश्वास्य तु मानवं ॥
रचेत्फले सेवनीञ्च वृद्धिपत्रेण दारयेत् ।
मेदस्ततः समुद्धृत्य दद्यात्कासीससैन्धवे ॥
बध्नीयाच्च यथोद्दिष्टं शुद्धे तैलञ्च दापयेत् ।
मनःशिलाललवणैः सिद्धमारुष्करेषु च ॥
मूत्रजां स्वेदयित्वा तु वस्त्रपट्टेन वेष्टयेत् ।
सेवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन तु ॥
अथात्र द्विमुखां नाडीं दत्वा विस्रावयेद्भिषक् ।
मूत्रं नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत् ॥
शुद्धायां रोपणं दद्यादर्ज्जयेदन्त्रहेतुकीं ।
अप्राप्तफलकोशायां वातवृद्धिक्रमो हितः ॥
तत्र या वङ्क्षणस्था तां दहेदर्द्धेन्दुवक्त्रया ।
सम्यग्मार्गावरोधार्थं कोशप्राप्तां तु वर्ज्जयेत् ॥
त्वचं भित्त्वाङ्गुष्ठमध्ये दहेच्चाङ्गविपर्य्ययात् ।

अनेनैव विधानेन वृद्धौ वातकफात्मिके ॥
मदहेत्प्रयतः किन्तु स्नायुच्छेदोऽधिकस्तयोः ।
शङ्खोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीं ॥
व्यत्यासाद्वा सिरां विध्येदन्त्रवृद्धिनिवृत्तये ।
उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः ॥
सिरां विध्येन्मेढ्रमध्ये पातयेद्वा जलौकसः ।
हरेदुभयतश्चापि दोषानत्यर्थमुच्छ्रितान् ॥
सद्योऽपहृतदोषस्य रुक्शोफावुपशाम्यतः ।
यदि वा दुर्ब्बलो जन्तुर्नवा प्राप्तं विरेचनं ॥
निरूहेण हरेत्तस्य दोषानत्यर्थमुच्छ्रितान् ।
प्रपौण्डरीकयष्ट्याह्ववर्षाभूकुष्ठदारुभिः ॥
सरलागुरुरास्नाभिर्व्वातजं संप्रलेपयेत् ।
निचुलैरण्डबीजानि यवगोधूमसक्तवः ॥
एतैश्च वातजं स्निग्धैः सुखोष्णैः सम्प्रलेपयेत् ।
प्रपौण्डरीकपूर्व्वैश्च द्रव्यैः सेकः प्रशस्यते ॥
गैरिकाञ्जनयष्ट्याह्वसारिवोशीरपद्मकैः ।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं संप्रलपयेत् ॥
पद्मोत्पलमृणालैश्च ससर्ज्जार्जुनवेतसैः ।
सर्पिःस्निग्धैः समधुकैः पैत्तिकं सम्प्रलेपयेत् ॥
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः ।
अथ वापि सुशीतेन कषायेण वटादिना ॥

शालाश्वकर्णाजकर्णधवत्वग्भिः कफोत्थितं ।
सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् ॥
रजन्यतिविषामुस्तासरलासुरदारुभिः ।
सपत्रपाठापत्तूरैरथ वा सम्प्रलेपयेत् ॥
सुरसारग्वधाद्यास्य क्वाथाभ्यां परिषेचयेत् ।
एवं संशोधनालेपसेकशोणितमोक्षणैः ॥
प्रतिकुर्य्यात्क्रियायोगैः प्राक्स्थानोक्तैर्हितैरपि ।
नायाति च यथापाकं प्रयतेत तथा भिषक् ॥
विदग्धैस्तु सिरास्नायुलङ्घनैः चीयते ध्वजः ।
अस्त्रेणोपचरेच्चापि पाकमागतमाशु वै ॥
तदापोह्य तिलैः सर्पिःक्षौद्रयुक्तैः प्रलेपयेत् ।
करवीरस्य पत्राणि जात्यारग्वधयोस्तथा ॥
प्रक्षालने प्रयोज्यानि वैजयन्त्यर्कयोरपि ।
सौराष्ट्रीगैरिकं तुत्थं पुष्पकासीससैन्धवं ॥
रोध्रं रसाञ्जनं दार्व्वीं हरितालं मनःशिलां ।
हरेणुकैले च तथा सूक्ष्मचूर्णानि कारयेत् ॥
तच्चूर्णं क्षौद्रसंयुक्तमुपदंशेषु पूजितं ।
जम्ब्वाम्रसुमनानिम्बश्वेताकाम्बोजिपल्लवाः ॥
शल्लकीवदरीविल्वपलाशतिनिशत्वचः ।
क्षीरिणाञ्च त्वचो योज्याः क्वाथे त्रिफलया सह ॥
तेन क्वाथेन नियतं व्रणं प्रक्षालयेद्भिषक् ।

अस्मिन्नेव कषाये तु तैलं धीरो विपाचयेत् ॥
गोजीविडङ्गयष्टीभिः सर्व्वगन्धैश्च संयुतं ।
एतत् सर्व्वोपदंशेषु श्रेष्ठं रोपणमिष्यते ॥
सर्जिकातुत्थकासीसं शैलेयञ्च रसाञ्जनं ।
मनःशिलासमैश्चूर्णं व्रणवीसर्पनाशनं ॥
गुन्द्रान्दग्ध्वा कृतं भस्म हरितालं मनःशिला ।
उपदंशविसर्पाणामेतच्छान्तिकरं परं ॥
मार्कवस्त्रिफलादन्ती ताम्रचूर्णमयोरजः ।
उपदंशं निहन्त्येव वृत्रमिन्द्राशनिर्यथा ॥
उपदंशद्वयेऽप्येतौ प्रत्याख्यायाचरेत्क्रियां ।
तयोरेव च या योग्या वीक्ष्य दोषबलाबलं ॥
उपदंशे विशेषेण शृणु भूयस्त्रिदोषजे ।
दुष्टव्रणविधिं कुर्य्यात्कुथितं मेहनं त्यजेत् ॥
जाम्बौष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद्भिषक् ।
सम्यग्दग्धञ्च विज्ञाय मधुसर्पिः प्रयोजयेत् ॥
शुद्धे च रोपणं दद्यात्कल्कं तैलं हितञ्च यत् ।
स्नेहस्वेदोपपन्ने तु श्लीपदेऽनिलजे भिषक् ॥
कृत्वा गुल्फोपरि सिरां विध्येत्तु चतुरङ्गुले ।
समाप्यायितदेहञ्च वस्तिभिः समुपाचरेत् ॥
मासमेरण्डजं तैलं पिबेन्मूत्रेण संयुतं ।
पयसौदनमश्नीयौन्नागरक्वथितेन च ॥

चैद्दृतं चोपयुञ्जीत शस्तो दाहस्तथाग्निना।
गुल्फस्याधःसिरां विध्येच्छ्लीपदे पित्तसम्भवे॥
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्वुदविसर्पवत्।
सिरां सुविदितां विध्येदङ्गुष्ठे श्लैष्मिके भिषक्॥
मधुयुक्तानि वाभीक्ष्णं कषायाणि पिवेन्नरः।
पिवेद्वाप्यभयाकल्कं मूत्रेणान्यतमेन च।
कटुकाममृतां शुण्ठीं विडङ्गं दारु चित्रकं॥
हितं वा लेपने नित्यं भद्रदारु सचित्रकं॥
विडङ्गमरिचार्केषु नागरे चित्रकेऽथ वा।
भद्रदार्व्वेलुकाख्ये च सर्व्वेषु लवणेषु च॥
तैलं पक्वं पिवेद्वापि यवान्नञ्च हितं सदा।
पिवेत्सर्षपतैलं वा श्लीपदानां निवृत्तये॥
पूतीकरञ्जपत्राणां रसं वापि यथावलं।
अनेनैव विधानेन पुत्रञ्जीवकजं रसं॥
प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित्।
किंचुकाकन्दनिर्य्यासं लवणं लथ पाकिमं॥
रसं दलाय पूर्व्वोक्तं पेयमेतद्भिषग्जितं।
काकादनीं काकजङ्घां वृहतीं कण्टकारिकां॥
कदम्बपुष्पीं मन्दारीं लम्बां शुकनसां तथा।
दग्ध्वा मूत्रेण तद्भस्म स्रावयेत्क्षारकल्पवित्॥
तत्र दद्यात्प्रतीवापं काकोडुम्बरिकारसं।

मदनाच्च फलात्क्वाथं शुकाख्यास्वरसं तथा ॥
एष चारस्तु पानीयः श्लीपदं हन्ति सेवितं ।
अपचीं गलगण्डञ्च ग्रहणीदोषमेव च॥
भक्तस्यानशनं चैव हन्यात्सर्व्वविषाणि च ।
एष्वेव तैलं संसिद्धं नस्याभ्यङ्गेषु पूजितं ॥
एतानेवामयान्हन्ति ये च दुष्टव्रणा नृणां ।
द्रवन्तीं चिट्टतां दन्तीं नीलीं श्यामां तथैव च ॥
सप्तलां शङ्खिनीं चैव दग्ध्वा मूत्रेण गालयेत् ।
दद्याच्च त्रिफलाक्वाथमेष चारस्तु साधितः ॥
अधो गच्छति पीतस्तु पूर्व्वैश्चाप्याशिषः समाः ।

---

॥ विंशतितमोऽध्यायः ॥

अथातः क्षुद्ररोगचिकित्सितं व्याख्यास्यामः ॥

अत्राजगल्लिकामामां जलौकोभिरुपाचरेत् ।
शुक्तिशृङ्गीयवक्षारकल्कैश्चालेपयेद्भिषक् ॥
श्यामालाङ्गलकीपाठाकल्कैर्व्वापि विचक्षणः ।
पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥
अन्धालजीं यवप्रख्यां पनसीं कच्छपी तथा ।
पाषाणगर्द्दभं चैव पूर्व्वं स्वेदेन योजयेत्॥
मनःशिलातालकुष्ठदारुकल्कैः प्रलेपयेत् ।
परिपाकगतान् भित्त्वा व्रणवत्समुपाचरेत् ॥

विवृतामिन्द्रवृद्धाञ्च गर्द्धभीं जालगर्द्धभं।
इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा॥
पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्।
रोपयेत् सर्पिषा पक्वान् सिद्धेन मधुरौषधैः॥
चिप्यमुष्णाम्बुना सिक्तमुत्कृत्य स्रावयेद्भिषक्।
चक्रतैलेन चाभ्यज्य सर्जचूर्णेन चूर्णयेत्॥
बन्धेनोपचरेच्चैनमशक्यं चाग्निना दहेत्।
मधुरौषधसिद्धेन ततस्तैलेन रोपयेत्॥
कुनखे विधिरप्येष कार्य्यो हि भिषजा भवेत्।
विदारिकां समभ्यज्य स्विन्नां विम्लाप्य लेपयेत्॥
नगवृन्तिकवर्षाभूविल्वमूलैः सुपेषितैः।
व्रणभावगतायां वा कृत्वा संशोधनक्रियां॥
रोपणार्थं हितं तैलं कषायमधुरैः शृतं।
प्रच्छानैर्वा जलौकोभिः स्राव्याऽपक्वा विदारिका॥
अजकर्णैः सपालाशैर्मूलकल्कैः प्रलेपयेत्।
पक्वां विदार्य्य शस्त्रेण पटोलपिचुमन्दयोः॥
कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत्।
बद्धाच चीरवृचस्य कषायैः खदिरस्य च॥
व्रणं प्रचालयेच्छुद्धास्ततस्ता रोपयेत्पुनः।
मेदोऽर्व्वुदविधानेन साधयेच्छर्करार्व्वुदं॥
कच्छूं विचर्चिकां पामां कुष्ठवत् समुपाचरेत्।

लेपश्च शस्यते सिक्थशताह्वगैरसर्षपैः ॥
वचादार्व्वीसर्षपैर्व्वा तैलं वा नक्तमालजं ॥
सारतैलमथाभ्यङ्गं कुर्व्वीत कटुकैः श्रृतं ।
पाददार्य्यां सिरां विद्धा स्वेदाभ्यङ्गौ प्रयोजयेत् ॥
मधूच्छिष्टवसामज्जसर्ज्जचूर्णघृतैः कृतः ।
यवाह्वगौरिकोन्मिश्रैः पादलेपः प्रशस्यते ॥
पादौ सिक्तारनालेन लेपनं ह्यलसे हितं ।
कल्कीकृतैर्निम्बतिलकासीसालैः ससैन्धवैः ॥
लाक्षारसोऽभया वापि कार्य्यं स्याद्रक्तमोक्षणं ।
सिद्धं रसे कण्टकार्य्यास्तैलं वा सार्षपं हितं ॥
कासीसरोचनशिलाचूर्णैर्व्वा प्रतिसारणं ।
उद्धृत्य दग्ध्वा स्नेहेन जयेत्कदरसंज्ञकं ॥
इन्द्रलुप्ते सिरां मूर्द्ध्नि स्निग्धस्विन्नस्य मोक्षयेत् ।
कल्कैः समरिचैर्दिह्याच्छिलाकासीसतुत्थकैः ॥
कुटन्नटादारुकल्कैर्लेपनंवा प्रशस्यते ।
प्रच्छयित्वावगाढंवा गुञ्जाकल्कैर्मुहुर्मुहुः ॥
लेपयेदुपशान्त्यर्थं कुर्य्याद्वापि रसायनं ।
मालतीकरवीराग्निनक्तमालविपाचितं ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परं ॥
अरुंषिकां हृते रक्ते सेचयेन्निम्बवारिणा ॥
दिह्यात् सैन्धवयुक्तेन वाजिविष्ठारसेन तु ।

हरितालनिशानिम्बकल्कैर्वा सपटोलजैः ॥
यष्टीनीलोत्पलैरण्डमार्कवैर्वा प्रलेपयेत् ।
सिरां दारुणके विद्धा स्निग्धस्विन्नस्य मूर्द्धनि ॥
अवपीडं शिरोवस्तिमभ्यङ्गञ्च प्रयोजयेत् ।
चालने कोद्रवतृणक्षारतोयं प्रशस्यते ॥
उपरिष्टात्प्रवक्ष्यामि विधिं पलितनाशनं ।
मसूरिकायां कुष्ठघ्नलेपनादिक्रिया हिता ॥
पित्तश्लेष्मविसर्पोक्ता क्रियावा संप्रशस्यते ।
जतुमणिं समुत्कृत्य मशकं तिलकालकं ॥
क्षारेण प्रदहेद्युक्त्या वह्निना वा शनैः शनैः ।
न्यच्छे व्यङ्गे सिरामोक्षो नीलिकायाञ्च शस्यते ॥
यथान्यायं यथाभ्यासं ललाट्यादिसिराव्यधः ।
घृष्ट्वा दिह्यात्त्वचं पिष्ट्वा क्षीरिणां क्षीरसंयुतां ॥
बलातिबलयष्ट्याह्वरजनीर्वा प्रलेपनं ।
पयस्यागुरुकालीयलेपनं वा सगैरिकं ॥
क्षौद्राज्ययुक्तया लिम्पेद्दंष्ट्रया शूकरस्य च ।
कपित्थराजादनयोः कल्कं वा हितमुच्यते ॥
यौवने पिडकास्वेव विशेषाच्छर्द्दनं हितं ।
लेपनञ्च वचारोध्रसैन्धवैः सर्षपान्वितैः ॥
कुस्तुम्बुरुवचालोध्रकुष्ठैर्वा लेपनं हितं ।
पद्मिनीकण्टके रोगे च्छर्दयेन्निम्बवारिणा ॥

तेनैव सिद्धं सक्षौद्रं सर्पिः पानं प्रदापयेत्।
निम्बारग्वधयोः क्वाथो हित उत्सादने भवेत्॥
परिवृत्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत्।
त्रिरात्रं पञ्चरात्रं वा वातघ्नैः शाल्वणादिभिः॥
ततोऽभ्यज्य शनैश्चर्म चानयेत् पीडयेन्मणिं।
प्रविष्टे च मणौ चर्म्म स्वेदयेदुपनाहनैः॥
दद्याद्वातहरान् वस्तीन्स्निग्धान्यन्नानि भोजयेत्।
अवपाटिकां जयेदेवं यथादोषं चिकित्सकः॥
निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीं।
दारवीं वा जतुकृतां घृताभ्यक्तां प्रवेशयेत्॥
परिषेके वसामज्ज शिशुमारवराहयोः।
चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतं॥
त्र्यहात्त्र्यहात् स्थूलतरां सम्यङ्नाडीं प्रवेशयेत्।
स्रोतो विवर्द्धयेदेवं स्निग्धमन्नञ्च भोजयेत्॥
भित्त्वा वा सेवनीं मुक्त्वा सद्यः क्षतवदाचरेत्।
सन्निरुद्धगुदं रोगं वल्मीकं वह्निरोहिणीं॥
प्रत्याख्याय यथायोगं चिकित्सितमथाचरेत।
विसर्पोक्तेन विधिना साधयेदग्निरोहिणीं॥
संनिरुद्धगुदे योज्या निरुद्धप्रकशक्रिया।
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्।
विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत्॥

वल्मीकन्तु भवेद्यस्य नातिवृद्धममर्म्मजं ॥
तत्र संशोधनं कृत्वा शोणितं मोचयेद्भिषक् ।
कुलत्थिकाया मूलैश्च गुडूच्या लवणेन च ॥
आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ।
श्यामामूलैः सपललैः शक्तुमिश्रैः प्रलेपयेत् ॥
सुस्निग्धैश्च सुखोष्णैश्च भिषक्तमुपनाहयेत् ।
पक्वं वा तद्विजानीयाद्गतीः सर्व्वा यथाक्रमं ॥
अभिज्ञाय ततश्छित्त्वा प्रदहेन्मतिमान्भिषक् ।
संशोध्य दुष्टमांसानि चारेण प्रतिसारयेत् ॥
व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान्भिषक् ।
सुमना ग्रन्थयश्चैव भल्लातकमनःशिले ॥
कालानुसारी सूक्ष्मैला चन्दनागुरुणी तथा ।
एतैः सिद्धं निम्बतैलं वल्मीके रोपणं हितं ॥
पाणिपादोपरिष्टात्तु च्छिद्रैर्बहुभिरावृतं ।
वल्मीकं यत्सशोफं स्याद्वर्ज्यं तत्तु विजानता ॥
धात्र्याःस्तन्यं शोधयित्वा वाले साध्याहिपूतना ।
पटोलपत्रत्रिफलारसाञ्जनविपाचितं ॥
पीतं घृतं नाशयति कृच्छ्रामप्यहिपूतनां ।
त्रिफलाकोलखदिरकषायं व्रणरोपणं ॥
कासीसरोचनातुत्थहरितालरसाञ्जनैः ।
लेपोऽम्लपिष्टो वदरीलग्ना सैन्धवसंयुता ॥

कपालतुल्यजं चूर्णं चूर्णकाले प्रयोजयेत् ।
चिकित्सन्मुष्ककच्छूञ्चाप्यहिपूतनपानवत् ॥
गुदभ्रंशे गुदं स्विन्नं स्नेहाभ्यक्तं प्रवेशयेत् ।
कारयेद्गोफणाबन्धं मध्यच्छिद्रेण चर्म्मणा ॥
विनिर्गमार्थं वायोश्च स्वेदयेच्च मुहुर्मुहुः ।
क्षीरं महापञ्चमूलं मूषिकां चान्त्रवर्जितां ॥
ततस्तस्मिन् पचेत्तैलं वातघ्नौषधसंयुतं ।
गुदभ्रंशमिदं कृच्छ्रं पानाभ्यङ्गात् प्रसाधयेत् ॥

---

॥ एकविंशतितमोऽध्यायः ॥

अथातः शूकरोगचिकित्सितं व्याख्यास्यामः ॥

संलिख्य सर्षपीं सम्यक् कषायैरवचूर्णयेत् ।
कषायेष्वेव तैलञ्च कुर्व्वीत व्रणरोपणं ॥
अष्ठीलिकाञ्जलौकोभिर्ग्राहयेत् कुशलो भिषक् ।
तथा चानुपशाम्यन्तीं कफग्रन्थिवदुद्धरेत् ॥
स्वेदयेद्ग्रथितं शश्वन्नाडीस्वेदेन बुद्धिमान् ।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥
कुम्भीकां पाकमापन्नां भिन्द्याच्छुद्धां तु रोपयेत् ।
तैलेन त्रिफलालोध्रतिन्दुकाम्रातकेन तु ॥
ग्राहयित्वा जलौकोभिरलजीं सेचयेत्ततः ।

कषायैस्त्रिषु सिद्धञ्च तैलं रोपणमिष्यते ॥
बलातैलेन कोष्णेन मृदितं परिषेचयेत् ।
मधुरैः सर्पिषा स्निग्धैः सुखोष्णैरुपनाहयेत् ।
संमूढपिडकां चिप्रं जलौकोभिरुपाचरेत् ।
भित्त्वा पर्य्यागतां चापि लेपयेत् चौद्रसर्पिषा ॥
अवमन्थे गते पाकं भिन्ने तैलं विधीयते ।
धवाश्वकर्णपत्तङ्गसल्लकीतिन्दुकीकृतं ॥
क्रियां पुष्करिकायान्तु शीतां सर्व्वां प्रयोजयेत् ।
जलौकोभिर्हरेच्चास्रक्सर्पिषा चावसेचयेत् ॥
स्पर्शहान्यां हरेद्रक्तं प्रदिह्यान्मधुरैरपि ।
चीरेक्षुरससर्पिर्भिः सेचयेच्च सुशीतलैः ॥
पिडकामुत्तमाख्याञ्च बडिशेनोद्धरेद्भिषक् ।
उद्धृत्य मधुसंयुक्तैः कषायैरवचूर्णयेत् ॥
रसक्रिया विधातव्या लिखिते शतपोनके ।
पृथक्पर्ण्यादिसिद्धञ्च देयं तैलमनन्तरं ॥
क्रियां कुर्य्याद्भिषक् प्राज्ञस्त्वक्पाकस्य विसर्पवत् ।
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्व्वुदे ॥
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रिया ।
शोधनं रोपणञ्चैव वीक्ष्य वीक्ष्यावचारयेत् ॥
अयास्वं सर्पिषः पानं पथ्यञ्चापि विरेचनं ।
हितः शोणितमोक्षश्च यच्चापि लघु भोजनं ॥

अर्बुदं मांसपाकञ्च विद्रधिं तिलकालकं।
प्रत्याख्याय प्रकुर्वीत भिषक् सम्यक्प्रतिक्रियां॥

---

॥ द्वाविंशतितमोऽध्यायः ॥

अथातो मुखरोगाणां चिकित्सितं व्याख्यास्यामः॥

चतुर्व्विधेन स्नेहेन मधूच्छिष्टयुतेन च।
वातजेऽभ्यञ्जनं कुर्य्यान्नाडीस्वेदञ्च बुद्धिमान्॥
मतिमानोष्ठकोपे तु शाल्वणं चोपनाहने।
मस्तिष्के चैव नस्ये च तैलं वातहरं हितं॥
श्रीवेष्टकं सर्ज्जरसं सुरदारु सगुग्गुलु।
यष्टीमधुकचूर्णन्तु विदध्यात्प्रतिसारणं॥
पित्तरक्ताभिघातोत्थं जलौकोभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः॥
शिरोविरेचनं धूमः स्वेदः कवल एव च।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके॥
त्र्यूषणं स्वर्जिकाक्षारो यवक्षारो विडं तथा।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणं॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः।
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणं॥
एतदोष्ठप्रकोपानां साध्यानां कर्म्म कीर्त्तितं।
दन्तमूलगतानान्तु रोगाणां कर्म्म वक्ष्यते॥

शीतादे हृतरक्ते तु तोये नागरसर्षपान् ।
निःक्वाथ्य त्रिफलामुस्तं गण्डूषः सरसाञ्जनः ॥
प्रियङ्गवश्च मुस्तञ्च त्रिफला च प्रलेपनं ।
नस्यञ्च त्रिफलासिद्धं मधुकोत्पलपद्मकैः ॥
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणं ।
सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणं ॥
हितः शिरोविरेकश्च नस्यं स्निग्धञ्च भोजनं ।
विस्राविते दन्तवेष्टे व्रणांस्तु प्रतिसारयेत् ॥
रोध्रपत्तङ्गयष्ट्याह्वलाक्षाचूर्णैर्मधूत्तरैः ।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥
काकोल्यादौ दशक्षीरसिद्धं सर्पिश्च नस्यतः ।
शौषिरे हृतरक्ते तु रोध्रमुस्तरसाञ्जनैः ॥
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ।
सारिवोत्पलयष्ट्याह्वसावरागुरुचन्दनैः ॥
क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितं ।
क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः ॥
संशोध्योभयतः कार्य्यं शिरश्चोपकुशे तथा ।
काकोडुम्बरिकागोजीपत्रैर्विस्रावयेदसृक् ॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत् ।
पिप्पलीसर्षपांश्चैव नागरं नैचुलं फलं ॥
सुखोदकेन संसृष्टं कवलं चापि धारयेत् ।

घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः ॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत् ।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्व्वाश्च शीतलाः ॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् ।
कृमिदन्तकवच्चापि विधिः कार्य्यो विजानता ॥
छित्त्वाधिमांसं सक्षौद्रैरेभिश्चूर्णैरुपाचरेत् ।
वचातेजोवतीपाठासर्जिकायावशूकजैः ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलत्रिफलानिम्बकषायश्चात्र धावने ॥
हितः शिरोविरेकश्च धूमो वैरेचनश्च यः ।
सामान्यं कर्म्म नाडीनां विशेषं चात्र मे शृणु ॥
यन्दन्तमधिजायेत नाडी तं दन्तमुद्धरेत् ।
छित्त्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत् ॥
शोधयित्वा दहेद्वापि क्षारेण ज्वलनेन वा ।
भिनत्त्युपेक्षिते दन्ते हनुकास्थिगतिर्ध्रुवं ॥
समूलं दशनं तस्मादुद्धरेद्भग्नमस्थि च ।
उद्धृतेतूत्तरे दन्ते समूले स्थिरबन्धने ॥
रक्तातियोगात्पूर्व्वोक्ता रोगा घोरा भवन्ति हि ।
काणः सञ्जायते जन्तुरर्दितं चास्य जायते ॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ।
धावने जातिमदनस्वादुकण्टकखादिरं ॥

कषायं जातिमदनकटुकस्वादुकण्टकैः ।
यष्ट्याह्वरोध्रमञ्जिष्ठाखदिरैश्चापि यत्कृतं ॥
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिं ।
कीर्त्तिता दन्तमूले तु क्रिया दन्तेषु वक्ष्यते ॥
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य वा ।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥
स्नैहिकश्च हितो धूमो नस्यं स्निग्धञ्च भोजनं ।
रसो रसयवाग्व्यश्च क्षीरं सन्तानिका घृतं ।
शिरोवस्तिर्हितश्चापि क्रमो यश्चानिलापहः ॥
अहिंसन्दन्तमूलानि शर्करामुद्धरेद्भिषक् ।
लाक्षाचूर्णैर्मधुयुतैस्ततस्ताः प्रतिसारयेत् ॥
दन्तहर्षक्रिया वापि कुर्य्यान्निरवशेषतः ।
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥
जयेद्विस्रावणैः खिन्नमचलं कृमिदन्तकं ।
तथावपीडैर्व्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्व्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
चलमुद्धृत्य च स्थानं विदहेच्छुषिरस्य च ॥
ततो विदारीयष्ट्याह्वशृङ्गाटककसेरुकैः ।
तैलं दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत् ॥
हनुमोक्षे समुद्दिष्टां कुर्य्याच्चार्द्दितवत्क्रियां ।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनं ॥

तथातिकठिनान्भव्यान्दन्तरोगी विवर्ज्जयेत्।
साध्यानां दन्तरोगाणां चिकित्सितमुदीरितं॥
जिह्वागतानां साध्यानां कर्म्म वक्ष्यामि सिद्धये।
श्रोष्ठप्रकोपेऽनिलजे यदुक्तं प्राक्चिकित्सितं॥
कण्टकेष्वनिलोत्थेषु तत्कार्य्यं भिषजा भवेत्।
पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते॥
प्रतिसारणगण्डूषं नस्यञ्च मधुरं हितं।
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः चये॥
पिप्पल्यादिर्मधुयुतः कार्य्यस्तु प्रतिसारणे।
गृह्णीयात्कवलांश्चापि गौरसर्षपसैन्धवैः॥
पटोलनिम्बवार्त्ताकुचारयूषैश्च भोजयेत्।
उपजिह्वान्तु संलिख्य चारेण प्रतिसारयेत्॥
शिरोविरेकगण्डूषधूमैश्चैनमुपाचरेत्।
जिह्वागतानां कर्म्मोक्तं तालव्यानां प्रवक्ष्यते॥
अङ्गुष्ठाङ्गुलिसन्दंशेनाकृष्य गलशुण्डिकां।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थितां॥
नोत्कृष्टञ्चैव हीनञ्च त्रिभागं छेदयेद्भिषक्।
अत्यादानात्स्रवेद्रक्तं तन्निमित्तं म्रियेत च॥
हीनच्छेदाद्भवेच्छोफो लालानिद्राभ्रमस्तमः।
तस्माद्वैद्यः प्रयत्नेन दृष्टकर्म्मा विशारदः॥
गलशुण्डीन्तु संछिद्य कुर्य्यात्प्राप्तमिमं क्रमं।

मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ॥
चैाद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ।
वचामतिविषां पाठां रास्नां कटुकरोहिणीं ॥
निःक्वाथ्य पिचुमन्दञ्च कवलं तत्र योजयेत् ।
इङ्गुदीकिणिहीदन्तीसरलासुरदारुभिः ॥
पश्चाल्लीह्कारयेत्पिष्टैर्वर्त्तिं गन्धोत्तरां शुभां ।
ततो धूमं पिबेज्जन्तुर्धिरक्तः कफनाशनं ॥
चारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः ।
तुण्डिकेर्य्यधुषे कूर्म्मे सङ्घाते तालुपुप्पुटे ॥
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्म्मणि ।
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनं ॥
स्नेहस्वेदौ तालुशोफे विधिश्चानिलनाशनः ।
कीर्त्तितं तालुजानान्तु कण्ठ्यानां कर्म्म वच्यते ॥
साध्यानां रोहिणीनान्तु हितं शोणितमोचणं ।
छर्दनं धूमपानञ्च गण्डूषो नस्यकर्म्म च ॥
वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत् ।
सुखोष्णान्स्नेहगण्डूषान्धारयेच्चाप्यभीक्ष्णशः ॥
पत्तङ्गशर्कराचैाद्रैःपैत्तिकीं प्रतिसारयेत् ।
द्राक्षापरूषकक्काथैा हितैा च कवलग्रहे ॥
आगारधूमकटुकैः श्लैष्मिकीं प्रतिसारयेत् ।
श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवं ॥

नस्यकर्म्मणि योक्तव्यं तथा कवलधारणे।
पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवां ॥
विस्राव्य कण्टशालूकं साधयेत्तुण्डिकेरिवत्।
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥
उपजिह्निकवच्चापि साधयेदधिजिह्निकां।
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत्॥
गिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत्।
अमर्म्मस्थं सुपक्कञ्च भेदयेद्गलविद्रधिं ॥
वातात्सर्व्वसरं चूर्णैर्लवणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥
ततोऽस्मै स्नैहिकं धूममिमं दद्याद्विचक्षणः।
शालराजादनैरण्डसारेङ्गुदिमधूकजाः ॥
मज्जानो गुग्गुलुध्याममांसीकालानुसारिवाः।
श्रीसर्जरसशैलेयमधूच्छिष्टानि वाहरेत्॥
तत्सर्व्वं सुकृतं चूर्णं स्नेहेनालोड्य युक्तितः।
टुण्टूकवृन्तं सचौद्रं मतिमांस्तेन लेपयेत्॥
एष सर्व्वसरे धूमः प्रशस्तः स्नैहिको मतः।
कफघ्नो मारुतघ्नश्च मुखरोगविनाशनः ॥
पित्तात्मके सर्व्वसरे शुद्धकायस्य देहिनः।
सर्व्वः पित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥
प्रतिसारणगण्डूषधूमसंशोधनानि च।

कफात्मके सर्व्वसरे विधिं कुर्य्यात्कफापहं ॥
पिबेदतिविषां पाठां मुस्तञ्च सुरदारु च।
रोहिणीं कटुकाख्याञ्च कुटजस्य फलानि च॥
गवां मूत्रेण मनुजो भागैर्धरणसम्मितैः।
एष सर्व्वान्कफकृतान्रोगान्योगोऽपकर्षति ॥
क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः।
विदध्यात्कवलान्वीक्ष्य दोषं तैलघृतैरपि।
रोगाणां मुखजातानां साध्यानां कर्म्म कीर्त्तितं॥
असाध्या अपि वक्ष्यन्ते रोगा ये यत्र कीर्त्तिताः।
ओष्ठप्रकोपा वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः ॥
दन्तमूलेषु वर्ज्यौ तु त्रिलिङ्गगतिशौषिरौ।
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः॥
जिह्वागतेष्वलासस्तु तालव्येष्वर्ब्बुदं तथा।
स्वरघ्नो वलयो वृन्दो वलासश्च विदारिका ॥
गलौघो मांसतानश्च शतघ्नी रोहिणी गले।
असाध्याः कीर्त्तिता ह्येते रोगा नव दशैव च।
तेषां चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत्॥

---

॥ त्रयोविंशतितमोऽध्यायः॥

अथातः शोफानां चिकित्सितं व्याख्यास्यामः॥

षड्विधोऽवयवसमुत्थः शोफोऽभिहितो लक्षणतः प्रतीकारतश्च

सर्व्वसरस्तु पञ्चविधः ॥ तद्यथा ॥ वातपित्तश्लेष्मसन्निपातविषनिमित्तः ॥ तत्रापि तर्पितस्याध्वगमनादतिमात्रमभ्यवहरतो वा पिष्टान्नहरितकशाकलवणानि क्षीणस्य वातिमात्रमम्लमुपसेवमानस्य मृत्पङ्कलोष्टकटशर्करानूपौदकमांससेवनादजीर्णिनो वा ग्राम्यधर्म्मसेवनादिदद्ध्याहारसेवनाद्गुर्व्यश्वोष्ट्ररथपदातिसङ्क्षोभणाद्दोषा धातूनप्रदूष्य श्वयथुमापादयन्त्यखिले शरीरे ॥

तत्र वातश्वयथुररुणः कृष्णो वा मृदुरनवस्थितस्तोदादयश्चात्र वेदनाविशेषाः ॥

पित्तश्वयथुः पीतो रक्तो वा शीघ्रानुसार्य्योषचोषादयश्चात्र वेदनाविशेषाः ॥

श्लेष्मश्वयथुः पाण्डुः शुक्लोवा स्निग्धः कठिनः शीतो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषाः ॥

सन्निपातश्वयथुः सर्व्ववर्णवेदनः ॥

विषनिमित्तस्तु गरोपयोगाद्दुष्टतोयसेवनात्प्रकोथोदकावगाहनात्सविषसलदिग्धचूर्णेनावचूर्णनाद्वा सविषमूत्रपुरीषशुक्रस्पृष्टानां तृणकाष्ठादीनां संस्पर्शनात् स तु मृदुः चिप्रोत्थानोऽवलम्बी चलो वा दाहपाकप्रायश्च भवति ॥

भवन्ति चात्र ॥ दोषाः श्वयथुमूर्द्ध्वं हि कुर्व्वन्त्यामाशयस्थिताः ।
पक्वाशयस्था मध्ये च वर्च्चःस्थानगतास्त्वधः ॥
कृत्स्नं देहमनुप्राप्ताः कुर्य्युः सर्व्वसरं तथा ।
श्वयथुर्मध्यदेशे यः स कष्टः सर्व्वगश्च यः ॥

अर्द्धाङ्गेऽरिष्टभूतस्य यश्चोर्द्ध्वं परिसर्पति ।
श्वासः पिपासा दौर्ब्बल्यं ज्वरश्छर्दिररोचकः ॥
हिक्कातीसारकासश्च शूनं सङ्क्षपयन्ति हि ।
सामान्यतो विशेषाच्च तेषां वच्यामि भेषजं ॥

शोफिनः सर्व्व एव परिहरेयुरम्ललवणदधिगुडवसापयस्तैल घृतपिष्टमयगुरूणि ॥

तत्र वातश्वयथौ चैवृतमैरण्डतैलं वा मासमर्द्धमासं वा पाययेत्। न्यग्रोधादिककषायसिद्धं सर्पिः पित्तश्वयथौ। आरग्वधादिसिद्धं श्लेष्मश्वयथौ। सन्निपातश्वयथौ स्नुहीचीरपात्रं द्वादशभिरम्लपात्रैः प्रतिसंसृष्टं दन्तीप्रतिवापं सर्पिः पाचयित्वा पाययेत्। विषनिमित्ते कल्पेषु प्रतीकारः ॥

अथातः सामान्यचिकित्सितं व्याख्यास्यामः ॥

तिल्वकघृतचतुर्थानि यान्युक्तान्युदरेषु तु ततोऽन्यतममुपयुज्यमानं श्वयथुमपहन्ति। मूत्रवर्त्तिक्रियां वा सेवयेत्। नवायसं वाहरहर्म्मधुना। विडङ्गातिविषाकुटजफलभद्रदारुनागरमरिचचूर्णं वा धरणमुष्णाम्बुना। त्रिकटुक्षारायश्चूर्णानि वा त्रिफलाकषायेण मूत्रं वा तुल्यचीरं हरितकीं वा तुल्यगुडामुपयुञ्जीत। देवदारु शुण्ठीं वा गुग्गुलुं वा मूत्रेण वर्षाभूकषायानुपानं वा तुल्यगुडं शृङ्गवेरं वा वर्षाभूकषायं मूलकल्कं वा सशृङ्गवेरं पयोऽनुपानमहरहर्मासं। व्योषवर्षाभूकषायसिद्धेन वा सर्पिषा मुद्गोलुम्बान्भच येत्॥ पिप्पलीपिप्पलीमूलं चव्यचित्रकमयूरवर्षाभूसिद्धं वा चीरं

पिबेत्। महौषधसुरङ्गीमूलसिद्धं वा। त्रिकटुकैरण्डमूलश्यामामूलसिद्धं वा। वर्षाभूशृङ्गवेरमहादेवदारुसिद्धं वा तथालाबूविभीतकफलकल्कं वा तण्डुलाम्बुना॥

क्षारपिप्पलीमरिचशृङ्गवेरानुसिद्धेन च मुद्गयूषेणालवणेनाल्पस्नेहेन भोजयेद्यवान्नं गोधूमान्नं वा वृचकार्कनक्तमालनिम्बवर्षाभूक्वाथैश्च परिषेकः सर्षपसौवर्चलसैन्धवशार्ङ्गेष्टाभिश्च प्रदेहः कार्य्यः। यथादोषञ्च विरेचनास्थापनानि तीक्ष्णान्यजस्रमुपसेवेत स्नेहस्वेदोपनाहांश्च सिराभिश्चाभीक्ष्णं शोणितमवसेचयेदन्यत्रोपद्रवशोफादिति॥

॥ भवति चात्र॥

पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलञ्च।
स्त्रियो घृतं तैलपयोगुरूणि शोफं जिघांसुः परिवर्जयेत्तु॥

---

## ॥ चतुर्विंशतितमोऽध्यायः॥

अथातोऽनागताबाधप्रतिषेधनीयं चिकित्सितं व्याख्यास्यामः॥

उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता।
धीमता यदनुष्ठेयं तत्सर्वं सम्प्रवक्ष्यते॥
तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतं।
कनिष्ठिकापरीणाहमृज्वग्रथितमव्रणं॥
अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजं।
अवेक्ष्यर्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत्॥

कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः ।
निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥
मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा ।
क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैन्धवेन च ॥
चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् ।
एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन च ॥
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् ॥
तद्दौर्गन्ध्योपदेहौ तु श्लेष्माणं चापकर्षति ।
वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च ॥
न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे ।
अथास्यपाके श्वासे च कासहिक्कावमीषु च ॥
दुर्ब्बलो जीर्णभक्तश्च मूर्च्छार्त्तो मदपीडितः ।
शिरोरुगार्त्तस्तृषितः श्रान्तः पानक्लमान्वितः ॥
अर्द्दिती कर्णशूली च दन्तरोगी च मानवः ।
जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च ॥
तन्मलापहरं शस्तं मृदु सश्लक्ष्णं दशाङ्गुलं ।
मुखवैरस्यदौर्गन्ध्यशोफजाड्यहरं सुखं ॥
दन्तदार्ढ्यकरं रुच्यं स्नेहगण्डूषधारणं ।
क्षीरवृक्षकषायैर्व्वा क्षीरेण च विमिश्रितैः ॥
भिल्लोदककषायेण तथैवामलकस्य वा ।
प्रक्षालयेन्मुखं नेत्रे स्वस्थः शीतोदकेन वा ॥

निलीकां मुखशोषञ्च पिडकां व्यङ्गमेव च ।
रक्तपित्तकृतान् रोगान्सद्य एव विनाशयेत् ॥
सुखं लघु निरीक्षेत दृढं पश्यति चक्षुषा ।
मतं श्रोतोऽञ्जनं श्रेष्ठं विशुद्धं सिन्धुसम्भव ॥
दाहकण्डूमलघ्नञ्च दृष्टिक्लेदरुजापहं ।
अक्ष्णोरूपावहञ्चैव सहते मारुतातपौ ॥
न नेत्ररोगा जायन्ते तस्मादञ्जनमाचरेत् ।
भुक्तवान् शिरसा स्नातः श्रान्तश्छर्दनवाहनैः ॥
रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च ।
कर्पूरजातिकक्कोललवङ्गकटुकाह्वयैः ॥
सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभं ।
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकं ॥
हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनं ।
प्रसेकशमनं हृद्यं गलामयविनाशनं ॥
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ।
रक्तपित्तक्षतक्षीणतृष्णामूर्च्छापरीतिनां ॥
रूक्षदुर्ब्बलमर्त्यानां न हितं चास्यशोषिणां ।
शिरोगतांस्तथा रोगाञ्शिरोऽभ्यङ्गोऽपकर्षति ॥
केशानां मार्द्दवं दैर्घ्यं बहुलं स्निग्धकृष्णतां ।
करोति शिरसस्तृप्तिंसुत्वक्कमपि चाननं ॥
सन्तर्पणं चेन्द्रियाणां शिरसः प्रतिपूरणं ।

मधुकं क्षीरशुक्ला च सरलं देवदारु च ॥
क्षुद्रकं पञ्चनामानं समभागानि संहरेत्।
तेषां कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ॥
सदैव शीतलं जन्तोर्मूर्द्धि तैलं प्रदापयेत्।
केशप्रसाधनी केश्या रजोजन्तुमलापहा ॥
हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणं।
अभ्यङ्गो मार्द्दवकरः कफवातनिरोधनः ॥
धातूनां पुष्टिजननो मृजावर्णबलप्रदः।
सेकः श्रमघ्नोऽनिलहृद्भग्नसन्धिप्रसाधकः ॥
क्षताग्निदग्धाभिहतविघृष्टानां रुजापहः।
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरास्तरोः ॥
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते।
सिरामुखैरोमकूपैर्धमनीभिश्च तर्पयन् ॥
शरीरबलमाधत्ते युक्तस्नेहो ऽवगाहने।
तत्र प्रकृतिसात्म्यर्त्तुदेशदोषविकारवित् ॥
तैलं घृतं वा मतिमान्युञ्ज्यादभ्यङ्गसेकयोः।
केवलं सामदोषेषु न कथञ्चन योजयेत् ॥
तरुणज्वर्य्यजीर्णो च नाभ्यक्तव्यौ कथञ्चन।
तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ॥
पूर्व्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा।
शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयोगदाः ॥

सन्तर्पणसमुत्थानां रोगाणां नैव कारयेत्।
शरीरायासजननं कर्म्म व्यायामसंज्ञितं॥
तत्कृत्वा तु सुखं देहं विमृद्नीयात्समन्ततः।
शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता॥
दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा।
श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता॥
आरोग्यं चापि परमं व्यायामादुपजायते।
न चास्ति सदृशं तेन किञ्चित्स्थौल्यापकर्षणं॥
नच व्यायामिनं मर्त्यमर्द्दयन्त्यरयो भयात्।
नचैनं सहसाक्रम्य जरा समधिरोहति॥
स्थिरीभवति मांसञ्च व्यायामाभिरतस्य च।
व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्त्तितस्य च॥
व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव।
वयोरूपगुणैर्हीनमपि कुर्य्यात्सुदर्शनं॥
व्यायामं कुर्वतो नित्यं विरुद्धमपि भोजनं।
विदग्धमविदग्धं वा निर्दोषं परिपच्यते॥
व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनां।
स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः॥
सर्व्वेष्वृतुष्वहरहः पुम्भिरात्महितैषिभिः।
बलस्यार्द्धेन कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा॥
हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते।

व्यायामं कुर्वतो जन्तोस्तद्बलार्द्धस्य लक्षणं ॥
वयोबलशरीराणि देशकालाशनानि च ।
समीक्ष्य कुर्य्याद्व्यायाममन्यथा रोगमाप्नुयात् ॥
क्षयस्तृष्णारुचिच्छर्दिरक्तपित्तभ्रमक्लमाः ।
कासशोषज्वरश्वासा अतिव्यायामसम्भवाः ॥
रक्तपित्ती कृशः शोषी श्वासकासक्षतातुरः ।
भुक्तवान्स्त्रीषु च क्षीणो भ्रमार्त्तश्च विवर्ज्जयेत् ॥
उद्वर्त्तनं वातहरं कफमेदोविलापनं ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परं ॥
सिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनं ।
उद्घर्षणोत्सादनाभ्यां जायेयातामसंशयं ॥
उत्सादनाद्भवेत्स्त्रीणां विशेषात्कान्तिमद्वपुः ।
प्रहर्षसौभाग्यमृजालाघवादिगुणान्वितं ॥
उद्घर्षणन्तु विज्ञेयं कण्डूकोठानिलापहं ।
ऊर्व्वोः सञ्जनयत्याशु फेनकः स्थैर्य्यलाघवे ॥
कण्डूकोठानिलस्तम्भमलरोगापहश्च सः ।
तेजनं त्वग्गतस्याग्नेः सिरामुखविरेचनं ॥
उद्घर्षणन्त्विष्टिकया कण्डूकोठविनाशनं ।
निद्रादाहश्रमहरं स्वेदकण्डूतृषापहं ॥
हृद्यं मलहरं श्रेष्ठं सर्व्वेन्द्रियविशोधनं ।
तन्द्रापापोपशमनं तुष्टिदं पुंस्त्ववर्द्धनं ॥

रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनं ।
उष्णेन शिरसः स्नानमहितञ्चक्षुषः सदा ॥
शीतेन शिरसः स्नानं चक्षुष्यमिति निर्द्दिशेत् ।
श्लेष्ममारुतकोपेतु ज्ञात्वा व्याधिबलाबलं ॥
काममुष्णं शिरःस्नानं भैषज्यार्थं समाचरेत् ।
अतिशीताम्बुशीते च श्लेष्ममारुतकोपनं ॥
अत्युष्णमुष्णकाले च पित्तशोणितवर्द्धनं ।
तच्चातिसारज्वरितकर्णशूलानिलार्त्तिषु ॥
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितं ।
सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्द्धनं ॥
स्वेददौर्गन्ध्यवैवर्ण्यश्रमघ्नमनुलेपनं ।
स्नानं येषां निषिद्धन्तु तेषामप्यनुलेपनं ॥
रक्षोघ्नमथ चौजस्यं सौभाग्यकरमुत्तमं ।
सुमनोऽम्बररत्नानां धारणं प्रीतिवर्द्धनं ॥
मुखालेपाद्दृढं चक्षुःपीनगण्डं तथाननं ।
अव्यङ्गपिडकं कान्तं भवत्यम्बुजसन्निभं ॥
पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलं ।
नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकं ॥
यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्द्धनं ।
देवतातिथिविप्राणां पूजनं गोत्रवर्द्धनं ॥
आहारः प्रीणनः सद्योबलकृद्देहधारकः ।

आयुस्तेजःसमुत्साहस्मृत्योजोऽग्निविवर्द्धनः ॥
पादप्रक्षालनं पादमलरोगश्रमापहं ।
चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनं ॥
निद्राकरो देहसुखश्चक्षुष्यः श्रमसुप्तिनुत् ।
पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः ॥
पादरोगहरं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनं ।
सुखप्रचारमौजस्यं सदापादत्रधारणं ॥
अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत ।
पादाभ्यामनुपानद्भ्यां सदा चंक्रमणं नृणां ॥
पापोपशमनं केशनखरोमापमार्ज्जनं ।
हर्षलाघवसौभाग्यकरमुत्साहवर्द्धनं ॥
वाणवारं मृजावर्णतेजोबलविवर्द्धनं ।
पवित्रं केश्यमुष्णीषं वातातपरजोऽपहं ॥
वर्षानिलरजोघर्महिमादीनां निवारणं ।
वर्ण्यं चक्षुष्यमौजस्यं शङ्करं छत्रधारणं ॥
शुनः सरीसृपव्यालविषाणिभ्यो भयापहं ।
श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते ॥
सत्वोत्साहबलस्थैर्य्यधैर्य्यवीर्य्यविवर्द्धनं ।
अवष्टम्भकरश्चापि भयघ्नं दण्डधारणं ॥
आस्या वर्णकफस्थौल्यसौकुमार्य्यकरी सुखा ।
अध्वा वर्णकफस्थौल्यसौकुमार्य्यविनाशनः ।

अत्यध्वा विपरीतोऽस्माज्जरादौर्व्वल्यकृच्च सः ॥
यत्तु चंक्रमणं नातिदेहपीडाकरं भवेत्।
तदायुर्व्वलमेधाग्निप्रदमिन्द्रियबोधनं॥
श्रमानिलहरं वृष्यं पुष्टिनिद्राधृतिप्रदं।
सुखं शय्यासनं दुःखं विपरीतगुणं मतं॥
बालव्यजनमोजस्यं मक्षिकादीनपोहति।
शोषदाहश्रमस्वेदमूर्च्छाघ्नो व्यजनानिलः॥
प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहं।
संवाहनं मांसरक्तत्वक्प्रसादकरं सुखं॥
प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपक्तिनुत्।
स्वेदमूर्छापिपासाघ्नमप्रवातमतोऽन्यथा॥
सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः।
निवातं ह्यायुषे सेव्यमारोग्याय च सर्व्वदा॥
आतपः पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत्।
दाहवैवर्ण्यकारी च छाया चैतानपोहति॥
अग्निर्व्वातकफस्तम्भशीतवेपथुनाशनः।
आमाभिष्यन्दजरणो रक्तपित्तप्रदूषणः॥
पुष्टिवर्णबलोत्साहमग्निदीप्तिमतन्द्रितां।
करोति धातुसाम्यञ्च निद्रा काले निषेविता॥

तत्रादित एव नीचनखरोम्णा शुचिना शुक्लवाससा लघूष्णीष च्छत्रोपानत्केन दण्डपाणिना काले हितमितमधुरपूर्व्वाभिभा

विणा बन्धुभूतेन भूतानान्तु गुरुवृद्धानुमतेन सुसहायेनानन्यमनसा खलूपचरितव्यं तदपि न रात्रौ न केशास्थिकण्टकाश्मतुषभस्मोत्करकपालाङ्गारामेध्यस्नानबलिभूमिषु न विषमेन्द्रकीलचतुष्पथश्वभ्राणामुपरिष्टात् ॥

न राजद्विष्टपरुषपैशुन्यानृतानिवेदत्। न देवब्राह्मणपितृपरिवादांश्च न नरेन्द्रद्विष्टोन्मत्तपतितक्षुद्रनीचाचारानुपासीत ॥

वृक्षपर्व्वतप्रपातविषमवल्मीकदुष्टवाजिकुञ्जराद्यधिरोहणानि परिहरेत् पूर्णनदीसमुद्राविदितपल्वलश्वभ्रकूपावतरणानि ॥ भिन्नशून्यागारश्मशानविजनारण्यवासाग्निसम्भ्रमव्यालभुजङ्गकीटसेवाग्रामाघातकलहशस्त्रसन्निपाताग्निसम्भ्रमव्यालसरीसृपशृङ्गिसन्निकर्षांश्च ॥

नाग्निगोगुरुब्राह्मणमेह्वादम्पत्यन्तरेणाभियायात्। न शवमनुयायात्। देवगोब्राह्मणचैत्यध्वजरोगिपतितपापकारिणाञ्च छायां नाक्रमेत। नास्तं गच्छन्तमुद्यन्तं वादित्यं वीक्षेत। गान्धयन्तीं परशस्यं वा चरन्तीं परस्मै न कस्मैचिदाचक्षीत नचोल्कापातेन्द्रधनूंषि। नाग्निं मुखेनापधमेत्। नापो भूमिं वा पाणिपादेनाभिहन्यात् ॥

न वेगान्धारयेत्। न वहिर्वेगान् ग्रामनगरदेवतायतनश्मशानचतुष्पथसलिलाशयपथिसन्निकृष्टानुत्सृजेन्न प्रकाशं न वाय्वग्निसलिलसोमार्कगोगुरुप्रतिमुखं ॥

न भूमिं विलिखेत्। नासम्वृतमुखः सदसि जृम्भोद्गारश्वासक्षव

षूनुत्सृजेत्। न पर्य्यस्तिकावष्टम्भपादप्रसारणानि गुरुसन्निधौ कुर्य्यात्॥

न बालकर्णनासाश्रोतोदशनविवराण्यभिकुष्णीयात् । न वीजयेत्केशमुखनखवस्त्रगात्राणि। न गात्रनखवक्त्रवादित्रं कुर्य्यात्। न काष्ठलोष्टतृणादीनभिहन्याच्छिन्द्याद्वा ॥

न प्रतिवातातपं सेवेत न भुक्तमात्रोऽग्निमुपासीत नोत्कटुकस्तिष्ठेत्। नाल्पकाष्ठासनमध्यासीत। न ग्रीवां विषमं धारयेत्। न विषमकायः क्रियां भजेद्भुञ्जीत वा। न प्रततमीक्षेत विशेषाज्ज्योतिर्भास्करसूक्ष्मचलभ्रान्तानि। न भारं शिरसा वहेत्। न स्वप्नजागरणशयनासनस्थानचङ्क्रमणयानवाहनप्रधावनलङ्घनप्लवनप्रतरणहास्यभाष्यव्यवायव्यायामादीनुचितानप्यतिसेवेत ॥

उचितादप्यहितात्क्रमशो विरमेत् हितमनुचितमप्यासेवेत क्रमशो न चैकान्ततः पादहीनात् ॥

नावाक्शिराः शयीत न भिन्नपात्रे नाञ्जलिपुटे नापः पिबेत्। काले हितमितस्निग्धमधुरप्रायमाहारं वैद्यप्रत्यवेक्षितमश्नीयात्। ग्रामगणगणिकापणिकशत्रुशठपतितभोजनानि परिहरेत्। शेषाण्यपि चानिष्टरूपरसगन्धस्पर्शशब्दमानसान्यन्यान्यविज्ञाणान्यपि वा सम्भूयदत्तानि तान्यपि मक्षिकाबालोपहतानि। नाप्रक्षालितपाणिपादो भुञ्जीत मूत्रोच्चारपीडितो न सन्ध्ययोर्नापाश्रितो नातीतकालं हीनमतिमात्रञ्चेति नभुञ्जीतोद्धृतस्नेहं ॥

नोदके पश्येदात्मानं न नग्नः प्रविशेज्जलं।
न नक्तं दधि भुञ्जीत न वाप्यघृतशर्करं॥

नामुद्गयूषं नाचौद्रं नोष्णैर्नामलकैर्व्विना ।

अन्यथा कुष्ठवीसर्पादिं जनयेत्। द्यूतमद्यातिनेत्राप्रतिभूता चित्रसमाक्रान्तगोष्ठीवादित्राणि न सेवेत । स्रजञ्छत्रोपानहौ कनकमतीतवासांसि न चान्यैर्धृतानि धारयेत् । ब्राह्मणमग्निं गाश्च नोच्छिष्टः स्पृशेत्॥

भवन्ति चात्र ॥ सुखमात्रं समासेन सद्वृत्तस्यैतदीरितं ।

आरोग्यमायुरर्थौ वा नासद्भिः प्राप्यते नृभिः ॥

यस्मिन्यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनां ॥

तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥

वर्षासु न पिवेत्तोयं पिवेच्छरदि मात्रया ।

वर्षासु चतुरो मासान्मात्रावदुदकं पिवेत् ॥

उष्णं हैमे वसन्ते च कामं ग्रीष्मे तु शीतलं ।

हेमन्ते च वसन्ते च सौष्ण्यरिष्टौ पिवेन्नरः ॥

शृतशीतं पिवेद्ग्रीष्मे प्रावृट्काले रसं पिवेत्।

यर्षं वर्षति तस्यान्ते प्रपिवेच्छीतलं जलं ॥

स्वस्थ एवमतोऽन्यस्तु दोषाहारमतानुगः ।

स्नेहं सैन्धवचूर्णेन पिप्पलीभिश्च संयुतं ॥

पिवेदग्निविवृद्ध्यर्थं नच वेगान्विधारयेत्।

अग्निदीप्तिकरं नृणां रोगाणां शमनं प्रति ॥

प्रावृट्शरद्वसन्तेषु सम्यक् स्नेहादिमाचरेत्।

कफे प्रच्छर्द्दनं पित्ते विरेको वस्तिरीरणे ॥

शस्यते त्रिष्वपि सदा व्यायामो दोषनाशनः ।
भुक्तं विरुद्धमपथ्यं व्यायामान्न प्रकुप्यति ॥
उत्सर्गमैथुनाहारशोधने स्यात्तु तन्मनाः ।
नेच्छेद्रोगभयात्प्राज्ञः पीडां वा कायमानसीं ॥
अतिस्त्रीसंप्रयोगाच्च रक्षेदात्मानमात्मवान् ।
शूलकासज्वरश्वासकार्श्यपाण्डामयक्षयाः ॥
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः ।
आयुष्मन्तो मन्दजरा वपुर्व्वर्णबलान्विताः ॥
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ।
त्रिभिस्त्रिभिरहोभिर्हि समीयात्प्रमदां नरः ॥
सर्व्वेष्वृतुषु घर्म्मेषु पक्षात्पक्षाद्व्रजेद्बुधः ।
रजस्वलामकामाञ्च मलिनामप्रियां तथा ॥
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीडितां ।
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिदोषसमन्वितां ॥
सगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि ।
सन्ध्यापर्व्वस्वगम्याञ्च नोपेयात्प्रमदां नरः ॥
गोसर्गे चार्द्धरात्रे च तथामध्यन्दिनेषु च ।
लज्जासमावहे देशे विहतेऽशुद्ध एव च ॥
क्षुधितो व्याधितश्चैव क्षुब्धचित्तश्च मानवः ।
वातविण्मूत्रवेगी च पिपासुरतिदुर्ब्बलः ॥
तिर्य्यग्योनावयोनौ च प्राप्तशुक्रविधारणं ।

दुष्टयोनौ विसर्गन्तु बलवानपि वर्जयेत्॥
रेतसश्चातिमात्रन्तु मूर्द्धावरणमेव च।
स्थितावुत्तानशयने विशेषेणैव गर्हितं॥
क्रीडायामपि मेधावी हितार्थी परिवर्जयेत्।
रजस्वलां प्राप्नवतो नरस्यानियतात्मनः॥
दृष्ट्यायुस्तेजसां हानिरधर्म्मश्च ततो भवेत्।
लिङ्गिनीं गुरुपत्नीञ्च सगोत्रामथ पर्व्वसु॥
वृद्धाञ्च सन्ध्ययोश्चापि गच्छतो जीवितक्षयः।
गर्भिण्यां गर्भपीडा स्याद्व्याधितायां बलक्षयः॥
हीनाङ्गीं मलिनां द्वेष्यां कामं वन्ध्यामसंवृते।
देशेऽशुद्धे च शुक्रस्य मनसश्च क्षयो भवेत्॥
क्षुधितः क्षुब्धचित्तश्च मध्याह्ने तृषितोऽबलः।
स्थितस्य हानिं शुक्रस्य वायोः कोपञ्च विन्दति॥
अतिप्रसङ्गाद्भवति शोषः शुक्रक्षयावहः।
व्याधितस्य रुजा क्लीबा मृत्युर्मूर्च्छा च जायते।
प्रत्यूषस्यर्द्धरात्रे च वातपित्ते प्रकुप्यतः॥
तिर्य्यग्योनावयोनौ च दुष्टयोनौ तथैव च।
उपदंशस्तथा वायोः कोपः शुक्रस्य च क्षयः॥
उच्चारिते मूत्रिते च रेतसश्च विधारणे।
उत्ताने च भवेच्छीघ्रं शुक्राश्मर्य्यास्तु सम्भवः॥
सर्व्वं परिहरेत्तस्मादेतल्लोकद्वये हितं।

शुक्रं चोपस्थितं मोहान्न सन्धार्य्यं कथञ्चन॥
वयोरूपगुणोपेतां तुल्यशीलां गुणान्वितां।
अभिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृतां॥
सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः।
भक्ष्याः सशर्कराः क्षीरं ससितं रस एव च॥
स्नानं सव्यजनं स्वप्नो व्यवायान्ते हितानि तु।

---

॥ पञ्चविंशतितमोऽध्यायः॥

॥ अथातो मिश्रकचिकित्सितं व्याख्यास्यामः॥

पाल्यामयास्तु विज्ञाव्या इत्युक्तं प्राग्निबोध तान्॥
परिपोटस्तथोत्पात उन्मन्थो दुःखवर्द्धनः।
पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः॥
सौकुमार्य्याच्चिरोत्सृष्ट सहसाभिप्रवर्द्धिते।
कर्णशोफो भवेत्पाल्यां सरुजः परिपोटवान्॥
कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः।
गुर्व्वाभरणसंयोगात्ताडनाद्घर्षणादपि॥
शोफः पाल्यां भवेच्छ्यावो दाहपाकरुगन्वितः।
रक्तो वा रक्तपित्ताभ्यामुत्पातः सगदो मतः॥
बलाद्वर्द्धयतः कर्णं पाल्यां वायुः प्रकुप्यति।
गृहीत्वा सकफं कुर्य्याच्छोफं तद्वर्णवेदनं॥
उन्मन्थकः सकण्डूको विकारः कफवातजः।

वर्द्धमाने यदा कर्णे कण्डूदाहरुगन्वितः ॥
शोफो भवति पाकश्च त्वकस्थोऽसौ दुःखवर्द्धनः ।
कफासृक्कृमयः कुर्य्युः सर्षपाभा विकारिणीः ॥
स्राविणीः पिडकाः पाल्यां कण्डूदाहरुगन्विताः ।
कफासृक्कृमिसम्भूतः सविसर्पान्वितस्ततः ॥
लिह्यात्सशष्कुलीं पालीं परिलेहीति स स्मृतः ।
पाल्यामया ह्यमी घोरा नरस्याप्रतिकारिणः ॥
मिथ्याहारविहारस्य पालिं हिंस्युरुपेक्षिताः।
तस्मादाशु भिषक्तेषु स्नेहादिक्रममाचरेत् ॥
तथाभ्यङ्गपरीषेकप्रदेहासृग्विमोक्षणं ।
सामान्यतो विशेषाच्च वक्ष्याम्यभ्यञ्जनं प्रति ॥
खरमञ्जरियष्ट्याह्वसैन्धवामरदारुभिः ।
सुपिष्टैः साश्वगन्धैश्च मूलकावल्गुजैः फलैः ॥
सर्पिस्तैलवसामज्जमधूच्छिष्टानि पाचयेत् ।
सक्षीराण्यथ तैः पालिं प्रदिह्यात्परिपोटके ॥
मञ्जिष्ठातिलयष्ट्याह्वसारिवोत्पलपद्मकैः ।
सरोध्रैः सकदम्बैश्च बलाजम्ब्वाम्रपल्लवैः ॥
सिद्धं धान्याम्लसंयुक्तं तैलमुत्पातनाशनं ।
तालपत्र्यश्वगन्धार्कवाकूचीफलसैन्धवैः ।
तैलं कुलीरगोधाभ्यां वसया सह पाचितं ॥
सरलालाङ्गलीभ्याञ्च हितमुन्मन्थनाशनं ।

तथाश्मन्तकजम्बाम्रपत्रक्वाथेन सेचनं ॥
प्रपौण्डरीकमधुकमञ्जिष्ठारजनीद्वयैः।
चूर्णैरुद्वर्त्तनैः पालीं तैलाक्तामवचूर्णयेत्॥
लाक्षाविडङ्गकल्केन तैलं पक्वावचारयेत्।
स्विन्नां गोमयपिण्डेन प्रदिह्यात्परिलेहिके ॥
पिष्टैर्व्विडङ्गैरथ वा त्रिवृच्छ्यामार्कसंयुतैः।
करञ्जेङ्गुदिवीजैर्व्वा कुटजारग्वधायुतैः ॥
सर्व्वैर्व्वा सार्षपं तैलं सिद्धं मरिचसंयुतं ॥
सनिम्बपत्रैरभ्यङ्गे मधूच्छिष्टान्वितं हितं।
पालीषु व्याधियुक्तासु तन्वीषु कठिनासु च॥
पुष्ट्यर्थं मार्द्दवार्थञ्च कुर्य्यादभ्यञ्जनं हितं।
लोपाकानूपमज्जानं वसां तैलं नवं घृतं॥
पचेद्द्विगुणं क्षीरमावाप्य मधुरं गणं।
अपामार्गाश्वगन्धे च तथा लाक्षारसं शुभं॥
तत्सिद्धं परिपूतञ्च स्वनुगुप्तं निधापयेत्।
तेनाभ्यञ्ज्यात् सदा पालिं सुस्विन्नामतिमर्द्दितां॥
एतेन पाल्यो वर्द्धन्ते निरुजो निरुपद्रवाः।
मृद्व्यः पुष्टाः समाः स्निग्धा जायन्ते भूषणक्षमाः॥
नीलीदलं भृङ्गरजोऽर्जुनलकुपिण्डीतकं कृष्णमयोरजश्च।
बीजोद्भवं साहचरञ्च पुष्पं पथ्याक्षधात्रीसहितं विचूर्ण्य ॥
एकीकृतं सर्व्वमिदं प्रमाथ पङ्केन तुल्यं नलिनीभवनं।

संयोज्य पक्वं कलशे निधाय लौहे घटे सद्मनि सापिधाने॥
अनेन तैलं विपचेद्विमिश्रं रसेन भृङ्गत्रिफलाभवेन।
आसन्नपाके च परीक्षणार्थं पत्रं बलाकाभवमाक्षिपेच्च॥
भवेद्यदा तद्भ्रमराङ्गनीलं तदा विपक्वं विनिधाय पात्रं।
कृष्णायसे मासमवस्थितं तदभ्यङ्गयोगात्पलितानि हन्यात्॥
सैरीयजम्ब्वर्जुनकाश्मरीजं पुष्पं तिलान्मार्कवचूतवीजे।
पुनर्नवाकर्दमकण्टकार्य्यौ कासीसपिण्डीतकवीजसारं॥
फलत्रयं लोहरजोऽञ्जनञ्च यष्ट्याह्वयं नीरजसारिवे च।
पिष्ट्वाथ सर्व्वं सहमोदयन्त्या साराम्भसा वीजकसम्भवेन॥
साराम्भसः सप्तभिरेव पश्चात्प्रस्थैःसमालोड्य दशाहगुप्तं।
लौहे सुपात्रे विनिधाय तैलमक्षोद्भवं तच्च पचेत्प्रयत्नात्॥
पक्वञ्च लौहेऽभिनवे निधाय नस्यं विदध्यात्परिशुद्धकायः।
अभ्यङ्गयोगैश्च नियुज्यमानं भुञ्जीत माषान्कृशरामथो वा॥
मासोपरिष्टाद्घनकुञ्चिताग्राः केशा भवन्ति भ्रमराञ्जनाभाः।
केशास्तथान्ये खलतौ भवेयुर्जरा न चैनं सहसाभ्युपैति॥
बलं परं सम्भवतीन्द्रियाणां भवेच्च वक्त्रं बलिभिर्व्विमुक्तं।
नाकामिनेऽनर्थिनि नाकृताय नैवारये तैलमिदं प्रदेयं॥
लाक्षारोध्रं द्वे हरिद्रे शिलाले कुष्ठं नागं गैरिकावर्णकाश्च।
मञ्जिष्ठाग्र्या स्यात्सुराष्ट्रोद्भवा च पत्तङ्गो वै रोचनं चाञ्जनञ्च॥
हेमाङ्गत्वक्पाण्डुपत्रं वटस्य कालीयं स्यात् पद्मकं पद्ममध्यं।
रक्तं श्वेतं चन्दनं पारदञ्च काकोल्यादिः क्षीरपिष्टश्च वर्गः॥

मेदोमज्जासिक्थकल्कोघृतञ्च दुग्धं क्वाथः क्षीरिणाञ्च द्रुमाणां।
एतत्सर्व्वं पक्वमेकध्यतस्तु वक्त्राभ्यङ्गे सर्पिरुक्तं प्रधानं ॥
हन्याद्व्यङ्गं नीलिकाञ्चातिरूढ़ां वक्त्रे जाताः स्फोटिकाश्चापि काश्चित्।
पद्माकारं निर्व्वलीकञ्च वक्त्रं कुर्य्यादेतत्पीनगण्डं मनोज्ञं ॥
राज्ञामेतद्योषितां चापि नित्यं कुर्य्यादेद्यस्तत्समानां नृणाञ्च।
कुष्ठघ्नं वै सर्पिरेतत्प्रधानं येषां पादे सन्ति वैपादिकाश्च ॥
हरीतकीचूर्णमरिष्टपत्रं चूतत्वचं दाडिमपुष्पवृन्तं।
पत्रञ्च दद्यान्मदयन्तिकाया लेपाङ्गरागो नरदेवयोग्यः ॥

---

॥ षड्विंशतितमोऽध्यायः ॥

॥ अथातः क्षीणबलीयं वाजीकरणचिकित्सितं व्याख्यास्यामः ॥

कल्यस्योदग्रवयसो वाजीकरणसेविनः।
सर्व्वेष्वृतुष्वहरहर्व्यवायो न निवारितः ॥
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छतां।
योषित्प्रसङ्गात्क्षीणानां क्लीवानामल्परेतसां ॥
विलासिनामर्थवतां रूपयौवनशालिनां।
नृणाञ्च बहुभार्य्याणां योगा वाजीकरा हिताः ॥
सेवमानो यदौचित्याद्वाजीवात्यर्थवेगवान्।
नारीस्तर्पयते तेन वाजीकरणमुच्यते ॥
भोजनानि विचित्राणि पानानि विविधानि च।
वाचः श्रोत्रानुगामिन्यस्त्वचः स्पर्शसुखास्तथा ॥

यामिनी सेन्दुतिलका कामिनी नवयौवना ।
गीतं श्रोत्रमनोहारि ताम्बूलं मदिराःस्रजः ॥
मनसश्चाप्रतिघातो वाजीकुर्व्वन्ति मानवं ॥
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते।
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैव्यं तन्मानसं स्मृतं ॥
कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः ।
सौम्यधातुक्षयो दृष्टः क्लैव्यं तदपरं स्मृतं ॥
अतिव्यवायशीलो यो नच वाजीक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकं ॥
महता मेढ्ररोगेण मर्मच्छेदेन वा पुनः ।
क्लैव्यमेतच्चतुर्थं स्यान्नृणां पुंस्त्वोपघातजं ॥
जन्मप्रभृति यः क्लीवः क्लैव्यं तत्सहजं स्मृतं।
बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्य्यतः ॥
षष्ठं क्लैव्यं मतं तत्तु स्थिरशुक्रनिमित्तजं ।
असाध्यं सहजं क्लैव्यं मर्म्मच्छेदाच्च यद्भवेत्॥
साध्यानामितरेषान्तु कार्य्या हेतुविपर्य्ययः ।
विधिर्वाजीकरो यस्तु तं प्रवक्ष्याम्यतः परं ॥
तिलमाषविदारीणां शालीनां चूर्णमेव वा ।
पौण्ड्रकेक्षुरसेनार्द्रं मर्द्दितं सैन्धवान्वितं ॥
वराहमेदसा युक्तां घृतेनोत्कारिकां पचेत् ।
तां भक्षयित्वा पुरुषो गच्छेत्तु प्रमदाशतं ॥

वस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान्।
शिशुमारवसापक्वाः शष्कुल्यस्तैस्तिलैः कृताः॥
यः खादेत्स पुमान्गच्छेत् स्त्रीणां शतमपूर्व्ववत्।
पिप्पलीलवणोपेतं वस्ताण्डं चीरसर्पिषा॥
साधितं भक्षयेद्यस्तु स गच्छेत्प्रमदाशतं।
पिप्पलीमाषशालीनां यवगोधूमयोस्तथा॥
चूर्णभागैस्समैस्तैस्तु घृते पूपालिकां पचेत्।
तां भक्षयित्वा पीत्वातु शर्करामधुरं पयः॥
नरश्चटकवद्गच्छेद्दश वारान्निरन्तरं।
चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितं॥
सर्पिर्म्मधुयुतं लीढ्वा दश स्त्रीरधिगच्छति॥
एवमामलकं चूर्णं स्वरसेनैव भावितं।
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत्॥
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति।
पिप्पलीलवणोपेते वस्ताण्डे घृतसाधिते॥
शिशुमारस्य वा खादेत्ते तु वाजीकरे भृशं।
कुलीरकूर्म्मनक्राणामण्डान्येवं तु भक्षयेत्॥
महिषर्षभवस्तानां पिबेच्छुक्राणि वा नरः।
अश्वत्थफलमूलत्वक्छुङ्गासिद्धं पयो नरः॥
पीत्वा सशर्कराक्षौद्रं कुलिङ्ग इव हृष्यति।
विदारिमूलकल्कान्तु घृतेन पयसा नरः॥

शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरं ।
पीतं पित्तज्वरं हन्यात्सारिवाद्यं सशर्करं ॥
सयष्टीमधुकं हन्यात्तथैवोत्पलपूर्व्वकं ।
शृतशीतकषायं वा सोत्पलं शर्करायुतं॥
गुडूचीपद्मरोध्राणां सारिवोत्पलयोस्तथा ।
शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः॥
द्राक्षारग्वधयोश्चापि काश्मर्य्यस्याथ वा पुनः ।
स्वादुतिक्तकषायाणां कषायैः शर्करायुतैः॥
सुशीतैः शमयेत्तृष्णां प्रवृद्धां दाहमेव च।
शीतं मधुयुतं तोयमाकण्ठाद्वा पिपासितं ॥
वामयेत्पाययित्वा तु तेन तृष्णा प्रशाम्यति ।
चीरैः चीरिकषायैश्च सुशीतैश्चन्दनायुतैः॥
अन्तर्द्दाहे विधातव्यमेतैश्चान्यैश्च शीतलैः ।
निदध्यादप्सु चालोड्य निशापर्य्युषितं ततः॥
चौद्रेण युक्तं पिबतो ज्वरदाहौ प्रशाम्यतः ।
पद्मकं मधुकं द्राक्षा पुण्डरीकमथोत्पलं ॥
यवान्भृष्टानुशीराणि समङ्गां काश्मरीफलं ।
जिह्वातालुगलक्लोमशोषे मूर्द्ध्नि च दापयेत् ॥
केशरं मातुलङ्गस्य मधुसैन्धवसंयुतं ।
शर्करादाडिमाभ्यां वा द्राक्षाखर्ज्जूरयोस्तथा ॥
वैरस्ये धारयेत्कल्कं गण्डूषञ्च यथा हितं ।

सप्तच्छदं गुडूचीञ्च निम्बस्फूर्ज्जकमेव च ॥
क्वाथयित्वा पिबेत्क्वाथं सक्षौद्रं कफजे ज्वरे ।
कटुत्रिकं नागपुष्पं हरिद्रा कटुरोहिणी ॥
कौटजञ्च फलं हन्यात्सेव्यमानं कफज्वरं ।
हरिद्रां चित्रकं निम्बमुशीरातिविषे वचां ॥
कुष्ठमिन्द्रयवान्मूर्व्वां पटोलं चापि साधितं ।
पिबेन्मरिचसंयुक्तं सक्षौद्रं कफजे ज्वरे ॥
सारिवातिविषाकुष्ठपुराख्यैः सदुरालभैः ।
मुस्तेन च कृतः क्वाथः पीतो हन्यात्कफज्वरं ॥
मुस्तं वृचकबीजानि त्रिफलाकटुरोहिणी ।
परूषकाणि च क्वाथः कफज्वरविनाशनः ॥
राजवृक्षादिवर्गस्य कषायं मधुसंयुतं ।
कफवातज्वरं हन्याच्छीघ्रं कालेऽवचारितं ॥
नागरं धान्यकं भार्गीमभयां सुरदारु च ।
वचां पर्प्पटकं मुस्तम्भूतीकमथ कटफलं ॥
निःक्वाथ्य कफवातोत्थे क्षौद्रहिङ्गुसमन्वितं ।
पातव्यं श्वासकासघ्नं श्लेष्मोत्सेके गलग्रहे ॥
हिक्कासु कण्ठश्वयथौ शूले हृदयपार्श्वजे ।
एलापटोलत्रिफलायष्ट्याह्वानां वृषस्य च ॥
क्वाथो मधुयुतः पीतो हन्ति पित्तकफज्वरं ।
कटुकाविजयाद्राक्षामुस्तपर्प्पटकैः कृतः ॥

कषायो नाशयेत्पीतः श्लेष्मपित्तभवं ज्वरं ।
भार्गीवचापर्प्पटकधान्यहिंग्वभयाघनैः ॥
काश्मर्य्यनागरैः क्वाथः सक्षौद्रः श्लेष्मपित्तजे ।
सशर्करामक्षमात्रां तु कटुकामुष्णवारिणा ॥
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवं ।
किराततिक्तममृतं द्राक्षामामलकं शटीं ॥
निःक्वाथ्य वातपित्तोत्थे तं क्वाथं सगुडं पिबेत् ।
रास्ना वृषोत्थस्त्रिफलाराजवृक्षफलैः सह ॥
कषायः साधितः पीतो वातपित्तज्वरं जयेत् ।
सर्वदोषसमुत्थे तु संसृष्टानवचारयेत् ॥
यथा दोषोच्छ्रयं चापि ज्वरान् सर्व्वानुपाचरेत् ।
वृश्चीकबिल्ववर्षाभूःपयश्चोदकमेव च ॥
पचेत्क्षीरावशिष्टंतु तद्धि सर्वज्वरापहं ।
उदकांशास्त्रयः क्षीरं शिंशपासारसंयुतं ॥
तत्क्षीरशेषं कथितं पेयं सर्वज्वरापहं ।
नलवेतसयोर्मूले मूर्व्वायां देवदारुणि ॥
कषायं विधिवत्कृत्वा पेयमेतज्ज्वरापहं ।
त्रैफले वा ससर्प्पिष्कः क्वाथःपेयस्त्रिदोषजे ॥
अनन्ता बालकं मुस्तां नागरं कटुरोहिणीं ।
सुखाम्बुना प्रागुदयात्पाययेताक्षसम्मितं ॥
एषसर्व्वज्वरान् हन्ति दीपयत्याशु चानलं ।

द्रव्याणि दीपनीयानि तथा वैरेचनानि च॥
एकशो वा द्विशो वापि ज्वरघ्नानि प्रयोजयेत्।
सर्पिर्म्मध्वभयातैललेहोऽयं सर्व्वजं ज्वरं ॥
शान्तिं नयेत्तृट्चापि सचौद्रा प्रबलं ज्वरं ।
ज्वरे तु विषमे कार्य्यमूर्द्धं चाधश्च शोधनं॥
घृतं क्षीद्रोदरोक्तं वा निहन्याद्विषमज्वरं॥
गुडप्रगाढां त्रिफलां पिवेद्वा विषमार्द्दितः ॥
गुडूचीनिम्बधात्रीणां कषायं वा समाचिकं॥
प्रातः प्रातः ससर्पिष्कं रसोनमुपयोजयेत्।
त्रिचतुर्भिः पचेत्क्वाथं पञ्चभिर्व्वा समन्वितैः ॥
मधुकस्य पटोलस्य रोहिण्या मुस्तकस्य च ॥
हरीतक्याश्च सर्व्वोऽयं त्रिविधो योग इष्यते ।
सर्पिःक्षीरसिताचौद्रमागधीर्व्वा यथाबलं ॥
दशमूलीकषायेण मागधीर्व्वा प्रयोजयेत्।
पिप्पलीवर्द्धमानं वा पिवेत् क्षीररसाशनः ॥
ताम्रचूडस्य मांसेन पिवेद्वा मद्यमुत्तमं ।
कोलाग्निमन्थत्रिफलाक्वाथे दध्ना घृतं पचेत्॥
तिल्वकावापमेतद्धि विषमज्वरनाशनं ।
पिप्पल्यतिविषाद्राक्षासारिवाविल्वचन्दनैः ॥
कटुकेन्द्रयवोशीरसिंहीतामलकीघनैः ।
त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः ॥

पक्वमेतैर्घृतं पीतं विजित्य विषमाग्निताम् ।
जीर्णज्वरशिरःशूलगुल्मोदरहलीमकं ॥
क्षयकासं ससन्तापं पार्श्वशूलानपास्यति ।
गुडूचीत्रिफलावासात्रायमाणायवासकैः ॥
क्वथितैर्विधिवत्पक्वमेतैः कल्कीकृतैः समैः ।
द्राक्षामागधिकाम्भोदनागरोत्पलचन्दनैः ॥
पीतं सर्प्पिः क्षयश्वासकासजीर्णज्वरान् जयेत् ।
कलशीबृहतीद्राक्षात्रायन्तीनिम्बगोक्षुरैः ॥
बलापर्प्पटकाम्भोदशालपर्णीयवासकैः ।
पक्वमुत्क्वथितैः सर्प्पिः कल्कैरेभिः समन्वितैः ॥
शटीतामलकीभार्गीमेदाकतकपौष्करैः ।
क्षीरद्विगुणसंयुक्तं जीर्णज्वरमपोहति ॥
शिरःपार्श्वरुजाकासक्षयप्रशमनं परं ।
पटोलीपर्प्पटारिष्टगुडूचीत्रिफलावृषैः ॥
कटुकाम्बुदभूनिम्बयासयष्ट्याह्वचन्दनैः ।
दार्व्वीशक्रयवोशीरत्रायमाणाकणोत्पलैः ॥
धात्रीमृङ्गरजोभीरुकाकमाचीरसैर्घृतं ।
सिद्धमाश्वपचीकुष्ठज्वरशुक्रार्ज्जुनव्रणान् ॥
हन्यान्नयनवदनकर्णजान् घ्राणजान् गदान् ।
विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलैः ।
प्रियंग्वेलैलवालूकचन्दनामरदारुभिः ॥

बर्हिष्ठकुष्ठरजनीपर्णिनीसारिवाद्वयैः ।
हरेणुकात्वट्त्वगीवचातालीशकेसरैः ॥
द्विक्षीरं विपचेत्सर्पिर्मालतीकुसुमैः सह ।
विषमज्वरकश्वासगुल्मोन्मादगरापहं ॥
एतत्कल्याणकं नाम सर्पिर्माङ्गल्यमुत्तमं ।
अलक्ष्मीग्रहरक्षोऽग्निमान्द्यापस्मारपापनुत् ॥
शस्यते नष्टशुक्राणां बन्ध्यानां गर्भदं परं ।
मेध्यञ्चक्षुष्यमायुष्यं रेतोमार्गरुजापहं ॥
एतैरेव यथाद्रव्यैः सर्वगन्धैश्च साधितं ।
कपिलाया घृतप्रस्थं सुवर्णमणिसंयुतं ॥
तत्क्षीरेण सहैकध्यं प्रसाध्य कुसुमैरिमैः ।
सुमनश्चम्पकाशोकशिरीषकुसुमैर्घृतं ॥
तथानलदपद्मानां केशरैर्दाडिमस्य च ।
तिथौ प्रशस्ते नक्षत्रे साधकस्यातुरस्य च ॥
कृतं मनुष्यदेवाय ब्राह्मणैरभिमन्त्रितं ।
दत्तं सर्वज्वरान् हन्ति महाकल्याणकं घृतं ॥
दर्शनस्पर्शनाभ्यान्तु सर्वरोगहरं शिवं ।
अधृष्यः सर्वभूतानां बलीपलितवर्ज्जितः ॥
अस्याभ्यासाद्घृतस्येह जीवेद्वर्षशतत्रयं ।
गव्यं दधि च मूत्रञ्च क्षीरं सर्पिः शकृद्रसः ॥
समभागानि पाच्यानि कल्कांश्चैतान्समावपेत् ।

त्रिफलां चित्रकं मुस्तं हरिद्रे द्वे विषां वचां ॥
विडङ्गं त्र्यूषणञ्चव्यं सुरदारु तथैव च ।
पञ्चगव्यमिदं पानाद्विषमज्वरनाशनं ॥
पञ्चगव्यघृतं गर्भात्पाव्यमन्यदूषेण च ।
बलयाथ परं पाच्यं गुडूच्या तद्वदेवतु ॥
जीर्णज्वरे च शोफे च पाण्डुरोगे च पूजितं ।
एतेनैव तु कल्पेन घृतं पञ्चाविकं पचेत् ॥
पञ्चाजम्पञ्चमहिषं चतुरुष्ट्रमथापि वा ।
त्रिफलाशीरसम्पाककटुकातिविषान्वितैः ॥
शतावरीसप्तपर्णगुडूचीरजनीद्वयैः ।
चित्रकत्रिवृतामूर्व्वापटोलारिष्टबालकैः ॥
किराततिक्तकवचाविशालापद्मकोत्पलैः ।
सारिवाद्वययष्ट्याह्वचविकारक्तचन्दनैः ॥
दुरालभापर्पटकत्रायमाणाटरूषकैः ।
रास्नाकुङ्कुममञ्जिष्ठामागधीनागरैस्तथा ॥
धात्रीफलरसैः सम्यग्द्विगुणैः साधितं हविः ।
परिसर्पज्वरश्वासगुल्मकुष्ठनिवारणं ॥
पाण्डुप्लीहाग्निमान्द्येभ्य एतदेव परं हितं ।
पटोलकटुकादार्व्वीनिम्बवासफलत्रिकं ॥
दुरालभापर्पटकत्रायमाणाः पलोन्मिताः ।
प्रस्थमामलकानाञ्च क्वाथयेत्सलिलार्म्मणे ॥

तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
रक्तपित्तकफस्वेदक्लेदपूयाङ्गशोषणं ॥
कामलाज्वरवीसर्पगण्डमालाहरं परं।
शृतत्पय: शर्करा च पिप्पल्यो मधुसर्प्पिषी ॥
पञ्चसारमिदं पेयं मथितं विषमज्वरे।
चतक्षीणे चये श्वासे हृद्रोगे चैतदिष्यते ॥
लाक्षाविश्वनिशामूर्वामञ्जिष्ठाखर्जिकामयै:।
षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत् ॥
चीरिवृक्षासनारिष्टं जम्बूसप्तच्छदार्जुनै:।
शिरीषखदिरास्फोतामृतवल्ल्यटरूषकै: ॥
कटुकापर्पटोशीरवचातेजोवतीघनै:।
साधितं तैलमभ्यङ्गादाशु जीर्णज्वरापहं ॥
निर्व्विषैर्भुजगैर्न्नागैर्व्विनीतै: कृततस्करै:।
त्रासयेदागमे चैनं तदहर्भोजयेन्न च॥
अत्यभिष्यन्दिगुरुभिर्व्वामयेद्वा पुन:पुन:।
मद्यं तीक्ष्णं पाययेत घृतं वा ज्वरनाशनं ॥
पुराणं वा घृतं काममुदारं वा विरेचनं।
निरूहयेद्वा मतिमान्सुखिन्नं तदहर्न्नरं ॥
अजाव्योश्चर्म्मरोमाणि वचाकुष्ठं पलङ्कषा।
निम्बपत्रम्मधुयुतं धूपनन्तस्य दापयेत् ॥
वैडालं वा शकृद्योज्यं वेपमानस्य धूपनं।

पिप्पलीसैन्धवं तैलं नैपालीचेचणाञ्जनं ॥
उदरोक्तानि सर्प्पींषि यान्युक्तानि पुरा मया ।
कल्पोक्तं चाजितं सर्प्पिः सेव्यमानं ज्वरं जयेत् ॥
भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः ।
जयेद्भूताभिषङ्गोत्थं विज्ञानाद्यैश्च मानसं ॥
अमचयेच भुञ्जीत घृताभ्यक्तो रसौदनं ।
अभिशापाभिचारोत्थौ ज्वरौ होमादिना जयेत् ॥
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडजौ ।
अभिघातज्वरे कुर्य्यात् क्रियामुष्णविवर्ज्जितां ॥
कषायमधुरां स्निग्धां यथा दोषमथापि वा ।
ओषधीगन्धविषजौ विषपित्तप्रसाधनैः ।
जयेत् कषायं च हितं सर्व्वगन्धकृतं तथा ॥
निम्बदारुकषायं वा हितं सौमनसं तथा ।
यवान्नविकृतिः सर्पिर्मद्यञ्च विषमे हितं ॥
सम्पूजयेद्द्विजान् गाश्च देवमीशानमम्बिकां ।
कफवातोत्थयोश्चापि ज्वरयोः शीतपीडितं ॥
दिह्यादुष्णेन वर्गेण परश्चोष्णो विधिर्हितः ।
सिञ्चेत्कोष्णैरारनालशुक्तगोमूत्रमस्तुभिः ॥
दिह्यात्पलाशैरथ वा सुरसार्ज्जकशिग्रुजैः ।
क्षारतैलेन चाभ्यङ्गः सशुक्तेन विधीयते ॥
पानमारग्वधादेश्च कथितस्य विशेषतः ।

अवगाहः सुखोष्णश्च वातघ्नक्वाथसंयुतः॥
जित्वा शीतं क्रमैरेभिः सुखोष्णजलसेचितं।
प्रवेश्यार्णिककार्पासकौशेयाम्बरसंवृतं॥
शाययेद्भानदेहञ्च कालागुरुविभूषितं।
स्तनाढ्या रूपसम्पन्नाः कुशला नवयौवनाः॥
भजेयुः प्रमदा गात्रैः शीतदैन्यापहारिभिः।
शरच्छशाङ्कवदना नीलोत्पलदलेक्षणाः।
स्फुरितभ्रूलताभङ्गललाटतटकम्पनाः।
प्रलम्बिविलसत्काञ्च्यो बिम्बीफलनिभाधराः॥
कृशोदर्य्योऽतिविस्तीर्णजघनोद्वहनालसाः।
कुङ्कुमागुरुदिग्धाङ्ग्यो घनतुङ्गपयोधराः॥
सुगन्धिधूपितश्लक्ष्णसूक्ष्मांशुकविभूषणाः।
गाढमालिङ्गयेयुस्तं नरं वनलता इव॥
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत्पुनः।
तासामङ्गवरश्लेषनिवारितहिमज्वरं॥
भोजयेद्धितमन्नञ्च तथासुखमवाप्नुयात्।
दाहाभिभूते तु विधिं कुर्य्याद्दाहविनाशनं॥
मधुफाणितयुक्तेन निम्बपत्राम्भसापि वा।
दाहज्वरार्त्तं मतिमान् वामयेत् क्षिप्रमेव च॥
शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभिः।
कोलामलकसंयुक्तैः शूकधान्याम्लसंयुतैः॥

अम्लपिष्टैः सुशीतैश्च फेणिलापल्लवैस्तथा।
अम्लपिष्टैस्तु शीतैर्व्वा पलाशतरुजैर्हरेत्॥
वदरीपल्लवोत्थेन फेनेनारिष्टकस्य च।
लिप्तेऽङ्गे दाहतृष्णमूर्च्छा सर्व्वथैव प्रशाम्यति॥
यवार्द्धकुडवं पिष्ट्वा मञ्जिष्ठार्द्धफलं तथा।
अम्लप्रस्थशतोन्मिश्रं तैलप्रस्थं विपाचयेत्॥
एतत्प्रह्लादनं तैलं ज्वरदाहविनाशनं।
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यो गणः॥
उत्पलादिर्गणो यस्तु पिष्टैर्व्वा तैः प्रलेपयेत्।
तत्कषायाम्लसंसिद्धाः स्नेहाश्चाभ्यञ्जने हिताः॥
तेषां शीतकषाये वा दाहार्त्तमवगाहयेत्।
दाहवेगे त्वतिक्रान्ते तस्मादुद्धृत्य मानवं॥
परिषिच्याम्बुभिः शीतैः प्रलिम्पेच्चन्दनादिभिः।
सानन्दा दीनमनसमाश्लिषेयुर्व्वराङ्गनाः॥
पेलवक्षौमसंवीताश्चन्दनार्द्रपयोधराः।
बिभ्रत्योऽम्बुजस्रजश्चित्रा मणिहारविभूषिताः॥
भजेयुस्ताः स्तनैः शीतैः स्पृशन्त्योऽम्बुहस्तैः सुखैः।
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत्पुनः॥
हितञ्च भोजयेदन्नं तथाप्नोति सुखं महत्।
पित्तज्वरोक्तं शमनं विरेकोऽन्यद्धितञ्च यत्॥

निर्हरेत्पित्तमेवादौ ज्वरेषु समवायिषु।

दुर्न्निवारतरं तद्धि ज्वरार्त्तेषु विशेषतः॥
छर्दिमूर्च्छापिपासादीनविरोधाज्ज्वरस्य तु।
उपद्रवान् जयेच्चापि प्रत्यनीकेन हेतुना॥
विशेषमपरं चात्र शृणूपद्रवनाशनं।
मधुकं रजनीमुस्तं दाडिमञ्चाम्लवेतसं॥
अञ्जनं तित्तिरीकञ्च नलदं पत्रमुत्पलं।
त्वचं व्याघ्रनखं चैव मातुलुङ्गरसो मधु॥
दिह्यादेभिर्ज्वरार्त्तस्य मधुशुक्तयुतैः शिरः
शिरोऽभितापसंमोहवमिहिक्काप्रवेपथून्॥
प्रदेहो नाशयत्येष ज्वरितानामुपद्रवान्।
मधूकमथ ह्रीवेरमुत्पलानि मधूलिकां॥
लोद्ध्रा चूर्णानि मधुना सर्पिषा च जयेद्वमिं।
कफप्रसेकासृक्पित्तहिक्काश्वासांश्च दारुणान्॥
लिहन् ज्वरार्त्तस्त्रिफलां पिप्पलींच समाक्षिकां।
कासे श्वासे च मधुना सर्प्पिषा स सुखी भवेत्।
विदारीदाडिमं लोध्रं दाधित्थं वीजपूरकं॥
एभिः प्रदिह्यान्मूर्द्धानं तृड्दाहार्त्तस्य देहिनः।
दाडिमस्य सितायाश्च द्राक्षामलकयोस्तथा॥
वैरस्ये धारयेत्कल्कं गण्डूषञ्च यथाहितं।
क्षीरेक्षुरसमाध्वीकसर्पिस्तैलोष्णवारिभिः॥
शून्ये मूर्द्धि हितं नस्यं जीवनीयशृतं घृतं।

२ न

चूर्णितत्रिफलाश्यामात्रिवृत्पिप्पलिसंयुतः ॥
सक्षौद्रः शर्करायुक्तो विरेकस्तु प्रशस्यते।
पक्वे पित्तज्वरे रक्ते चोर्द्धगे वेपथौ तथा ॥
कफवातात्ययोरेवं स्नेहाभ्यङ्गैर्व्विशोधयेत्।
हृतदोषो भ्रमार्त्तस्तु लिह्यात् चौद्रसिताभयाः॥
वातघ्नमधुरैर्य्योज्या निरूहा वातजे ज्वरे।
विभज्य दोषं प्राणञ्च यथास्वं वानुवासनं॥
उत्पलादिकषायाद्याश्चन्दनोशीरसंयुताः।
शर्करामधुराः शीताः पित्तज्वरहरा मताः॥
आम्रादीनां त्वचं शुङ्गं चन्दनामलकोत्पलैः।
गैरिकाञ्जनमञ्जिष्ठामृणालान्यथ पद्मकं॥
श्लक्ष्णपिष्टन्तु पयसा शर्करामधुसंयुतं।
सुपूतं शीतलं वस्तिं दूयमानाय दापयेत्॥
ज्वरदाहापहं तेषु सिद्धञ्चैवानुवासनं।
आरग्वधगणक्वाथाः पिप्पल्यादिसमायुताः॥
सक्षौद्रा एव देयाः स्युः कफज्वरविनाशनाः।
कफघ्नैरेव संसिद्धा द्रव्यैश्चाप्यनुवासनाः॥
संसर्गे सन्निपाते च संसृष्टा वस्तयो हिताः।
संसृष्टैरेव संसृष्टा द्रव्यैश्चाप्यनुवासनाः॥
वातरोगापहाः सर्व्वे स्नेहा ये सम्यगीरिताः।
विना तैलं त एव स्युर्य्योज्या मारुतजे ज्वरे॥

निखिलेनोपयोज्याश्च त एवाभ्यञ्जनादिषु ।
पैत्तिके मधुरैस्तिक्तैः सिद्धं सर्पिः प्रयुज्यते ॥
श्लैष्मिके कटुतिक्तैश्च संसृष्टानीतरेषु च ।
हतावशेषं पित्तन्तु त्वक्स्थं जनयति ज्वरं ॥
पिबेदिक्षुरसं तत्र शीतं वा शर्करोदकं ।
शालिषष्टिकयोरन्नमश्नीयात् क्षीरसंप्लुतं ॥
कफवातोत्थयोरेव स्वेदाभ्यङ्गौ प्रयोजयेत् ।
घृतं द्वादशरात्रात्तु देयं सर्व्वज्वरेषु च ॥
तेनान्तरेणाशयं स्वङ्गता दोषा भवन्ति हि ।
धातून् प्रक्षोभयन् दोषो मोक्षकालेऽवलीयते ॥
तेन व्याकुलचित्तस्तु म्रियमाण इवेहते ।
लघुत्वं शिरसः स्वेदो मुखमापाण्डुपाकि च ॥
क्षवथुश्चान्नकाङ्क्षा च ज्वरमुक्तस्य लक्षणं ।
शम्भुक्रोधोद्भवो घोरो बलवर्णाग्निसादकः ॥
रोगराट् रोगसंघातो ज्वर इत्युपदिश्यते ।
व्यापित्वात् सर्व्वसंस्पर्शात् क्रूरत्वादन्तसम्भवात् ॥
अन्तको ह्येष भूतानां ज्वर इत्युपदिश्यते ।

---

॥ चत्वारिंशत्तमोऽध्यायः ॥

अथातोऽतीसारप्रतिषेधं व्याख्यास्यामः ॥
गुर्व्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः ।

विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषाद्भयात् ।
शोकाद्दुष्टाम्बुमद्यातिपानात्सात्म्यर्त्तुपर्य्ययात् ॥
जलाभिरमणैर्व्वेगविघातैः क्रिमिदोषतः ।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥

संशम्यापां धातुरन्तः कृशानुं वर्च्चोमिश्रो मारुतेन प्रणुन्नः ।
वृद्धोऽतीवाधःसरत्येव यस्माद्व्याधिं घोरं तं त्वतीसारमाहुः ॥
एकैकशः सर्व्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः ।
केचित्प्राहुर्नैकरूपप्रकारं नैवेत्येवं काशिराजस्त्ववोचत् ॥
दोषावस्थास्तस्य नैकप्रकाराः काले काले व्याधितस्योद्भवन्ति ।
हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधाः ॥
विट्सङ्ग आध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥
शूलाविष्टः सक्तमूत्रोऽन्त्रकूजी स्रस्तापानः सन्नकट्यूरुजङ्घः ।
वर्च्चो मुञ्चत्यल्पमल्पं सफेनं रूक्षं श्यावं सानिलं मारुतेन ॥
दुर्गन्ध्युष्णं वेगवन्मांसतोयप्रख्यं भिन्नं स्विन्नदेहोऽतितीक्ष्णं ।
पित्तात्पीतं नीलमालोहितं वा तृष्णामूर्च्छादाहपाकज्वरार्त्तः ॥
तन्द्रा निद्रा गौरवोत्क्लेशसादी वेगाशङ्की सृष्टविट्कोऽपि भूयः ।
शुक्लं सान्द्रं श्लेष्मणा श्लेष्मयुक्तं भक्तद्वेषी निस्वनं हृष्टरोमा ॥
तन्द्रायुक्तो मोहसादास्यशोषी वर्च्चः कुर्य्यान्नैकवर्णं तृषार्त्तः ।
सर्व्वोद्भूतः सर्व्वलिङ्गोपपत्तिः कृच्छ्रश्चायं बालवृद्धेष्वसाध्यः ॥
तैस्तैर्भावैः शोचतोऽल्पाशनस्य वाष्पो वेगः पक्तिमाविध्य जन्तोः ।

कोष्ठं गत्वा क्षोभयन् यस्य रक्तं तच्चाधस्तात्काकनन्तीप्रकाशं ॥
वर्चोमिश्रं निःपुरीषं सगन्धं निर्गन्धं वा सार्य्यते तेन कोष्ठात्।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥
आमाजीर्णैः प्रद्रुताः क्षोभयन्तः कोष्ठं दोषाः सम्प्रदुष्टाः सभक्तं ।
नानावर्णं नैकशः सारयन्ति कृच्छ्राज्जन्तोः षष्ठमेनं वदन्ति ॥

संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्धं विच्छिन्नं चामसंज्ञितं ॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य तु ।
लाघवञ्च मनुष्यस्य तस्य पक्वं विनिर्द्दिशेत् ॥

सर्प्पिर्मेदोवेसवाराम्बुतैलमाजं चीरं चौद्ररूपं स्रवेद्यत ।
मञ्जिष्ठाभं मस्तुलुङ्गोपमं वा विस्रं शीतं प्रेतगन्ध्यञ्जनाभं ॥
राजीमद्वा चन्द्रकैः सन्ततं वा पूयप्रख्यं कर्द्दमाभं तथोष्णं ।
हन्यादेतद्यत्प्रतीपं भवेच्च चीणं हन्युश्चोपसर्गाः प्रभूताः ॥

असम्वृतगुदं चीणं दुराध्मातमुपद्रुतं ।
गुदे पक्वे गतोष्माणमतीसारकिणं त्यजेत् ॥
शरीरिणामतीसारः संभूतो येन केनचित् ।
दोषाणामेव लिङ्गानि कदाचिन्नाति वर्त्तते ॥
स्नेहाजीर्णनिमित्तस्तु बहुशूलप्रवाहिकः ।
विसूचिकानिमित्तस्तु चान्योऽजीर्णनिमित्तजः ॥
विषार्शःकृमिसम्भूतो यथास्वन्दोषलक्षणः ।
आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ॥

अतः सर्व्वातिसारास्तु ज्ञेयाः पक्वामलक्षणैः ।
तत्र लङ्घनमेवादौ पूर्व्वरूपेषु देहिनां ॥
ततः पाचनसंयुक्तं यवाग्वादिक्रमो हितः ।
अथ वा वामयित्वा तु शूलाध्माननिपीडितं ॥
पिप्पलीसैन्धवाम्भोभिर्लङ्घनाद्येरुपाचरेत् ।
कार्य्यं च वमनस्यान्ते प्रायशो लघुभोजनं ॥
खडयूषयवागूषु पिप्पल्याद्येव योजयेत् ।
अनेन विधिना चामं यस्य वै नोपशाम्यति ॥
हरिद्रादिं वचादिं वा पिबेत्मातः स मानवः ।
आमातिसारिणां कार्य्यं नादौ सङ्ग्रहणं नृणां ॥
तेषां दोषा विबद्धाः प्राग्जनयन्त्यामयानिमान् ।
प्लीहपाण्ड्वामयानाहमेहकुष्ठोदरज्वरान् ॥
शोफगुल्मग्रहण्यर्शःशूलालसकहृद्ग्रहान् ।
सशूलं बहुशः कृच्छ्रादिबन्धं योऽतिसार्य्यते ॥
दोषान्सन्निचितान् वाथ पथ्याभिः संप्रवर्त्तयेत् ।
योऽतिद्रवं प्रभूतञ्च पुरीषमतिसार्य्यते ॥
तस्यादौ वमनं कुर्य्यात्पश्चाल्लङ्घनपाचनं ।
स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते ॥
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ।
आमे च लङ्घनं शस्तमादौ पाचनमेव वा ॥
योगाश्चात्र प्रवक्ष्यन्ते त्वामातीसारनाशनाः ।

देवदारुवचामुस्तानागरातिविषाभयाः ॥
कलिङ्गातिविषाहिङ्गुसौवर्च्चलवचाभयाः ।
अभयाधान्यकं मुस्तं बालकं विल्वमेव च ॥
मुस्तं पर्प्पटकं शुण्ठीवचाशातिविषाभयाः ।
अभयातिविषाहिङ्गुवचासौवर्च्चलं तथा ॥
चित्रकं पिप्पलीमूलं वचाकटुकरोहिणी ।
पाठावत्सकवीजानि हरीतकीमहौषधं ॥
मूर्व्वा निर्द्दहनी पाठा त्र्यूषणं गजपिप्पली ।
सिद्धार्थका भद्रदारु शताङ्गा कटुरोहिणी ॥
एला सावरकं कुष्ठं हरिद्रे कौटजा यवाः ।
मेषशृङ्गीलगेले च कृमिघ्नं वृचकाणि च ॥
वृचादनी वीरतरुर्बृहत्यौ द्वे सहे तथा ।
एरण्डलक्ष तैन्दुकी दाडिमी कौटजो शमी ॥
पाठा तेजोवती मुस्तं पिप्पलीकौटजं फलं ।
पटोल दीप्यकौ विल्वं हरिद्रे देवदारु च ॥
विडङ्गमभया पाठा शृङ्गवेरं घनं वचा ।
वचा वत्सकवीजानि सैन्धवं कटुरोहिणी ॥
हिङ्गुवत्सकवीजानि वचाविल्वशलाटु च ।
नागरातिविषा मुस्तं पिप्पल्यो वात्सकं फलं ॥
महौषधं प्रतिविषा मुस्तं चेत्यामपाचनाः ।
प्रयोज्या विंशतिर्य्योगाः श्लोकार्द्धविहितास्त्विमे ॥

धान्याम्लोष्णाम्बुमद्यानां पिबेदन्यतमेन वा।
निःक्वाथान्वा पिबेदेषां सुखोष्णान् साम्बुसाधितान्॥
निखिलेनोपदिष्टोऽयं विधिरामोपशान्तये।
हरीतकीमतिविषां हिङ्गु सौवर्चलं वचां॥
पिबेत्सुखाम्बुना जन्तुरामातीसारपीडितः।
पटोलं दीप्यकं बिल्वं वचापिप्पलिनागरम्॥
मुस्तं कुष्ठं विडङ्गञ्च पिबेद्वापि सुखाम्बुना।
शृङ्गवेरं गुडूचीञ्च पिबेदुष्णेन वारिणा॥
लवणान्यथ पिप्पल्यो विडङ्गानि हरीतकी।
चित्रकं शिंशपा पाठा शार्ङ्गष्टा लवणानि च॥
हिङ्गुवृचकबीजानि लवणानि च भागशः।
हरिद्रन्यथ पिप्पल्यः कल्कावचसमौ स्मृतौ॥
वचागुडूचीकाण्डानि योगोऽयं परमो मतः।
एते सुखाम्बुना योगा देयाः पञ्च सतां मताः।
पयस्युत्क्वाथ्य मुस्तानां विंशतिन्त्रिगुणाम्भसि॥
चीरावशिष्टं तत्पीतं हन्यामं शूलमेव च।
निवृत्तेष्वामशूलेषु यस्य न प्रगुणोऽनिलः॥
स्तोकं स्तोकं रुजामच्च सशूलं योऽतिसार्य्यते।
सक्षारलवणैर्युक्तं मन्दाग्निः प्रपिबेद्घृतं॥
चीरनागरचाङ्गेरीकोलदध्यम्लसाधितं।
सर्पिरच्छं पिबेद्वापि शूलातीसारशान्तये।

दध्ना तैलघृतं पक्वं सव्योषजातिचित्रकैः॥
सविल्वपिप्पलीमूलदाडिमैर्व्वा रुगन्वितैः।
निखिलो विधिरुक्तोऽयं वातश्लेष्मोपशान्तये॥
तीक्ष्णोष्णवर्ज्यनेनन्तु विदध्यात्पित्तजे भिषक्।
यथोक्तमुपवासान्ते यवागूश्च प्रशस्यते॥
बलधारंष्टुमत्याश्च स्वदंष्ट्राट्टहतीषु च।
शतावर्य्याञ्च संसिद्धाः सुशीता मधुसंयुताः॥
मुद्गादिषु च यूषाः स्युर्द्दीपनैः सुसंस्कृताः।
मृदुभिर्द्दीपनैस्तिक्तैर्द्रव्यैः स्यादामपाचनं॥
हरिद्रातिविषापाठावत्सबीजरसाञ्जनं।
रसाञ्जनं हरिद्रे द्वे बीजानि कुटजस्य च।
पाठा गुडूची भूनिम्बस्तथैव कटुरोहिणी॥
एतैः स्ते क्वार्द्धनिर्द्दिष्टैः क्वाथाः स्युः पित्तपाचनाः।
मुस्तं कुटजबीजानि भूनिम्बं सरसाञ्जनं॥
दार्व्वीदुरालभा विल्वं बालकं रक्तचन्दनं।
चन्दनं बालकं मुस्तं भूनिम्बं सदुरालभं॥
मृणालं चन्दनं रोध्रं नागरं नीलमुत्पलं।
पाठा मुस्तं हरिद्रे द्वे पिप्पली कौटजं फलं॥
फलत्वचं वत्सकस्य शृङ्गवेरघृते वचा।
षडेतेऽभिहिता योगाः पित्तातीसारनाशनाः॥
विल्वशक्रयवाम्भोदबालकातिविषाकृतः।

कषायो हन्त्यतीसारं सामं पित्तसमुद्भवं ॥
मधुकोत्पलबिल्वाम्बुह्रीवेरोशीरनागरैः ।
शृतः क्वाथो मधुयुतः पित्तातीसारनाशनः ॥
यदा पक्वोऽप्यतीसारः सरत्येव मुहुर्मुहुः ।
ग्रहण्या मार्दवाज्जन्तोस्तत्र संस्तम्भनं हितं ॥
समङ्गा धातकीपुष्पं मञ्जिष्ठा लोध्रमुस्तकं ।
शाल्मलीवेष्टकं रोध्रं वृक्षदाडिमयोस्त्वचौ ॥
आम्रास्थिमध्यं लोध्रञ्च बिल्वमध्यं प्रियङ्गवः ।
मधुकं शृङ्गवेरञ्च दीर्घवृन्तत्वगेव च ॥
चत्वार एते योगाः स्युः पक्वातीसारनाशनाः ।
उक्ता य उपयोज्यास्ते सक्षौद्रास्तण्डुलाम्बुना ॥
मौस्तं कषायमेकं वा पेयं मधुसमायुतं ।
लोध्राम्बष्ठाप्रियङ्ग्वादीन् गणांस्तत्र प्रयोजयेत् ॥
पद्मां समङ्गां मधुकं बिल्वजम्बूशलाटु वा ।
पिबेत्तण्डुलतोयेन सक्षौद्रमगदङ्करं ॥
कच्छुरामूलकल्कं वा उडुम्बरफलोपमं ।
पयस्याचन्दनं पद्मा सितामुस्ताब्जकेशरं ।
पक्वातिसारं योगोऽयं जयेत्पीतः सशोणितं ॥
निरामरूपं शूलार्त्तं लङ्घनाद्यैश्च कर्षितं ।
नरं रूक्षमवेक्ष्याग्निं सक्षारं पाययेद्घृतं ॥
बलाद्वृहत्यंशुमती कच्छुरामूलसाधितं ।

मधूच्छिनं समधुकं पिवेच्छूलैरभिद्रुतः॥
दार्व्वीविल्वकणा द्राचाकटुकेन्द्रयवैर्घृतं।
साधितं हन्त्यतीसारं वातपित्तकफात्मकं॥
पयोघृतञ्च मधु च पिवेच्छूलैरभिद्रुतः।
सिताजमोदकङ्कुमधुकैरवचूर्ण्णितं॥
अवेदनं सुसम्पक्वं दीप्ताग्नेः सुचिरोत्थितं।
नानावर्ण्णमतीसारं पुटपाकैरुपाचरेत्॥
त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेशरसंयुतं।
काश्मरीपत्रैस्त्वावेष्ठ्य सूत्रेण तं दृढं॥
मृदावलिप्तं सुकृतमङ्गारेष्ववकूलयेत्।
खिन्नमुद्धृत्य निःपीड्य रसमादाय तं ततः॥
शीतं मधुयुतं कृत्वा पाययेतोदरामये।
जीवन्तीमेषशृङ्ग्यादिष्वेवं द्रव्येषु साधयेत्।
तित्तिरिं लुञ्चितं सम्यक् निःकृष्टान्त्रन्तु पूरयेत्॥
न्यग्रोधादित्वचां कल्कैः पूर्व्ववच्चावकूलयेत्।
रसमादाय तस्याथ सुखिन्नस्य समाचिकं॥
शर्कैरापहितं शीतं पाययेच्चोदरामये॥
लोध्रचन्दनयष्ट्याह्वदार्व्वीपाठासितोत्पलान्।
तण्डुलोदकसम्पिष्टान् दीर्घवृन्तत्वगन्वितान्॥
पूर्व्ववत्कूलितात्तस्माद्रसमादाय शीतलं।
मध्वाक्तम्पाययेच्चैतत्कफपित्तोदरामये॥

एवं प्ररोहैः कुर्व्वीत वटादीनां विधानवित् ।
पुटपाकान् यथायोगं जाङ्गलोपहितान् शुभान् ॥
बहुश्लेष्मसरक्तञ्च मन्दवातं चिरोत्थितं ।
कौटजं फाणितञ्चापि हन्त्यतीसारमोजसा ॥
अम्बष्ठादि मधुयुतं पिप्पल्यादिसमन्वितं ।
पृश्निपर्णीबलाविल्वशालकोत्पलधान्यकैः ॥
सनागरैः पिबेत्पेयां साधितामुदरामयी ।
अरलुत्वक्प्रियङ्गुञ्च मधुकं दाडिमाङ्कुरान् ॥
आवाप्य पिष्ट्वा दधनि यवागूं साधयेद्द्रवां ।
एषा सर्व्वानतीसारान् हन्ति पक्वानसंशयं ॥
रसाञ्जनं सातिविषं त्वग्बीजं कौटजं तथा ।
धातकी नागरञ्चैव पाययेत्तण्डुलाम्बुना ॥
सशूलरक्तजं घ्नन्ति योगा मधुसमन्विताः ।
मधुकं विल्वपेश्यश्च शर्करा मधुसंयुताः ॥
अतीसारं निहन्युश्च शालिषष्टिकयोः कणाः ।
तद्वल्लीढं मधुयुतं वदरीमूलमेव तु ॥
वदर्य्यर्ज्जुनजम्बाम्रशल्लकीवेतसत्वचः ।
शर्कराः क्षौद्रसंयुक्ताः पीता घ्नन्त्युदरामयं ॥
एतैरेव यवागूश्च मण्डान् यूषांश्च कारयेत् ।
पानीयानि च तृष्णासु द्रव्येष्वेतेषु बुद्धिमान् ॥
कृतं शाल्मलिवृन्तेषु कषायं हिमसंज्ञकं ।

निशापर्य्युषितं पेयं सक्षौद्रं मधुकान्वितं ॥
विबद्धवातविट्शूलपरीतः सप्रवाहिकः ।
सरक्तपित्तश्च पयः पिबेत्तृष्णासमन्वितः ॥
यथामृतं तथा क्षीरमतीसारेषु पूजितं ।
चिरोत्थितेषु तत्पेयमपामार्गैस्त्रिभिः शृतं ॥
दोषशेषं हरेत्तद्धि तस्मात्पथ्यतमं स्मृतं ।
हितः स्नेहविरेको वा वस्तयः पिच्छिलाश्च ये ॥
पिच्छिलाख्यरसे सिद्धं हितं च घृतमुच्यते ।
शकृता यस्तु संसृष्टमतिसार्य्येत शोणितं ॥
प्राक्पश्चाद्वा पुरीषस्य सशूलपरिकर्त्तिकः ।
क्षीरिशुङ्गाशृतं सर्पिः पिबेत्सक्षौद्रशर्करं ॥
दार्व्वीत्वक्पिप्पलीशुण्ठीलाक्षाशक्रयवैर्घृतं ।
संयुक्तं भद्ररोहिण्या पक्वं पेयादिमिश्रितं ॥
त्रिदोषमप्यतीसारं पीतं हन्ति सुदारुणं ।
गौरवे वमनं पथ्यं यस्य स्यात्प्रबलः कफः ॥
ज्वरे दाहे सविड्बन्धे मारुताद्रक्तपित्तवत् ।
सम्पक्वे बहुदोषे च विबन्धे मूत्रशोधनैः ।
कार्य्यमास्थापनं चिप्रं तथा चैवानुवासनं ॥
प्रवाहणे गुदभ्रंशे मूत्राघाते कटिग्रहे ।
मधुराम्लशृतं तैलं सर्प्पिश्चाप्यनुवासनं ॥
गुदपाकस्तु पित्तेन यस्य स्याद्दहिताग्निनः ।

तत्र पित्तहराः सेकास्तत्सिद्धाश्चानुवासनाः ॥
दधिमण्डसुराविल्वसिद्धं तैलं समाहृते।
भोजने च हितं क्षीरं कच्छुरामूलसाधितं ॥
अल्पाल्पं बहुशोरक्तं सरुग्य उपवेश्यते।
यदा वायुर्व्विबद्धश्च पिच्छावस्तिस्तदा हितः॥
प्रायेण गुददौर्ब्बल्यं दीर्घकालातिसारिणां।
भवेत्तस्माद्धितं तेषां गुदे तैलावचारणं ॥
कपित्थशाल्मलीफञ्जीवनकार्पासिदाडिमाः।
पूथिकाकच्छुराभेलुः शणश्चुचूःसदाधिका॥
शालपर्णी पृश्निपर्णी वृहती कण्टकारिका।
बलाश्वदंष्ट्राविल्वानि पाठानागरधान्यकं॥
एष आहारसंयोगो हितः सर्व्वातिसारिणां।
तिलकल्को हितश्चात्र सैद्धोमुद्गरसस्तथा॥
पित्तातिसारी यो मर्त्यः पित्तलानि निषेवते।
पित्तं प्रदुष्टं तस्याशु रक्तातीसारमावहेत्॥
ज्वरं शूलं तृषं दाहं गुदपाकञ्च दारुणं।
यो रक्तं शक्रतः पूर्ब्बं पश्चाद्वा प्रतिसार्य्यते॥
स पल्लवैर्व्वटादीनां ससर्पिः साधितं पयः।
पिबेत्स शर्कराक्षौद्रमथ वाप्यभिमथ्य तत्॥
नवनीतमथो लिह्यात्तक्रं चानुपिबेत्ततः।
पियालशाल्मलीप्लक्षशल्लकीतिनिशत्वचः॥

क्षीरे विमृदिताः पीताः सक्षौद्रा रक्तनाशनाः ।
मधुकं शर्करां लोध्रं पयस्यामथ सारिवां ॥
पिबेच्छागेन पयसा सक्षौद्रां रक्तनाशनीं ।
मञ्जिष्ठां सारिवां लोध्रं पद्मकं कुमुदोत्पलं ॥
पिबेत्पद्माञ्च दुग्धेन छागेनासृक्प्रशान्तये ।
शर्करोत्पललोध्राणि समङ्गा मधुकन्तिलाः ॥
तिलामोचरसो लोध्रं तथैव मधुकोत्पलं ।
कच्छुरा तिलकल्कश्च योगाश्चत्वार एव तु ॥
आजेन पयसा पेयाः सरक्ते मधुसंयुताः ।
द्रवे सरक्ते स्रवति बालबिल्वं सफाणितं ॥
सक्षौद्रतैलं प्रागेव लिह्यादाशु हितं हि तत् ।
कोशकारं घृते भृष्टं लाजचूर्णं सिता मधु ॥
सशूलं रक्तपित्तोत्थं लीढं हन्त्युदरामयं ।
बिल्वमध्यं समधुकं शर्कराक्षौद्रसंयुतं ॥
तण्डुलाम्बुयुतो योगः पित्तरक्तोत्थितं जयेत् ।
गुदपाके च ये उक्तास्तेऽत्रापि विधयः स्मृताः ॥
रुजायां वाप्रशाम्यन्त्यां पिच्छावस्तिर्हितो भवेत् ।
रक्तविड्दोषबहुलं दीप्ताग्निर्योऽतिसार्य्यते ॥
विडङ्गत्रिफलाकृष्णाकषायैस्तं विरेचयेत् ।
अथवैरण्डसिद्धेन पयसा केवलेन वा ॥
यवागूर्व्वितरेत्तस्य वातघ्नैर्दीपनैः कृताः ।

दीप्ताग्निर्निःपुरीषो यः सार्य्यते फेणिलं शकृत्॥
स पिबेत्फाणितं शुण्ठीदधितैलपयोघृतं।
खिन्नानि गुडतैलाभ्यां भक्षयेद्वदराणि च ॥
सुखिन्नान् पिष्टवदापि समं बिल्वशलाटुभिः ।
दध्नोपयुज्य कुल्माषान् श्वेतामनुपिबेत्सुरां ॥
शशमांसं सरुधिरं समङ्गां सघृतं दधि।
खादेद्दिपाच्य सेवेत स्वदन्नं शकृतः चये ॥
संस्कृतो यमके माषयवकोलरसः शुभः ।
भोजनार्थञ्च दातव्यो दधिदाडिमसाधितः ॥
विडं बिल्वशलाटूनि नागरं चाम्लपेषितं।
दध्नः सरश्च यमके भ्रष्टो वर्चःचये हितः ॥
सशूलं चीणवर्चा यो दीप्ताग्निरतिसार्य्यते ।
स पिवेद्दीपनैर्युक्तं सर्प्पिस्तक्राह्वकैःसह ॥
वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य।
प्रवाहमाणस्य मुहुर्मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः ॥
प्रवाहिका वातकृता सशूला पित्तात्सदाहा सकफा कफाच ।
सशोणिता शोणितसम्भवा स्तुस्ताः स्नेहरूक्षप्रभवा मतास्तु ॥
तासामतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वताञ्च ।
न शान्तिमायाति विलङ्घनैर्या योगैरुदीर्णा यदि पाचनैर्वा ॥
ताःचीरमेवाशु शृतं निहन्ति तैलं तिलाः पिच्छिलवस्तयश्च ।
आर्द्रैः कुशैः संपरिवेष्टितानि वृन्तान्यथार्द्राणि हि शाल्मलीनां ॥

पक्वानि सम्यक्पुटपाकयोगेनापीड्य तेभ्यो रसमाददीत ॥
क्षीरं शृतं तैलहविर्विमिश्रं कल्केन यष्टीमधुकस्य वापि ।
वस्तिं विदध्याद्भिषगप्रमत्तः प्रवाहिकामूत्रपुरीषसङ्गे ॥
द्विपञ्चमूलीक्वथितेन शूले प्रवाहमाणस्य समाक्षिकेण ।
क्षीरेण चास्थापनमग्र्यमुक्तं तैलेन युञ्ज्यादनुवासनं च ॥
वातघ्नवर्गे लवणेषु चैव तैलं च सिद्धं हितमन्नपाने ।
लोध्रं विडं बिल्वशलाटु चैव लिह्याच्च तैलेन कटु त्रिकालं ॥
दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीडितस्तु ।
सुतप्तकुप्यक्वथितेन वापि क्षीरेण शीतेन मधुप्लुतेन ॥
शूलार्दितो व्योषविदारिगन्धासिद्धेन दुग्धेन हिताय भोज्यः ।
वातघ्नसंग्राहकदीपनीयैः कृतान् रसांश्चाप्युपभोजयेच्च ॥
खादेच्च मत्स्यान् रसमाप्नुयाच्च वातघ्नसिद्धं सघृतं सतैलं ।
एणाश्वजानान्तु वटप्रवालैः सिद्धानि सार्द्धं पिशितानि खादेत् ॥
मेध्यस्य सिद्धन्त्वथ वापि रक्तं वस्तस्य दध्ना घृततैलयुक्तं ।
खादेत्प्रयुक्तैः शिखिलावजैश्च भुञ्जीत यूषैर्दधिभिश्च मुख्यैः ॥
माषान् सुसिद्धान् घृतमण्डयुक्तान् खादेच्च दध्ना मरिचोपदंशान् ॥

मदाहजे मूत्रकृच्छ्रे भिषग्वस्तिं प्रदापयेत् ।
पयोमधुघृतोन्मिश्रं मधुकोत्पलसाधितं ॥
स वस्तिः शमयेत्तस्य रक्तं दाहमथो ज्वरं ।
मधुरौषधसिद्धञ्च हितं तस्यानुवासनं ॥
रात्रावहनि वा नित्यं रुजार्त्तो यो भवेन्नरः ।

यथायथा स तैलः स्याद्वातशान्तिस्तथा तथा ॥
प्रशान्ते मारुते वापि शान्तिं याति प्रवाहिका ।
तस्मात्प्रवाहिकारोगे मारुतं शमयेद्भिषक् ॥

पाठाजमोदा कुटजस्य बीजं शुण्ठीमना मागधिकाश्च पिष्टाः ।
सुखाम्बुपीताः शमयन्ति रोगं लेह्यान्नलिह्युं सघृतं पयो वा ॥
शुण्ठी घृतं सचवकं सतैलं विपाच्य लीढ्वामयमाशु हन्यात् ।
गजाशनाकुम्भिकदाडिमानां रसैः कृते तैलघृते सदध्नि ॥
बिल्वान्विता पथ्यतमा यवागूर्धारोष्णदुग्धस्य तथा च पानं ।
लघूनि पथ्यान्यथ दीपनानि स्निग्धानि भोज्यान्युदरामयेषु ॥
हिताय नित्यं वितरेद्धि भोज्यं योगांश्च तांस्तान् भिषगप्रमत्तः ।

तृष्णापनयनी लघ्वी दीपनी वस्तिशोधनी ।
ज्वरे चैवातिसारे च यवागूः सर्व्वदा हिता ॥
रौक्ष्याज्जाते क्रिया स्निग्धा रूक्षा स्नेहनिमित्तजे ।
भयजे सान्त्वनापूर्व्वा शोकजे शोकनाशिनी ॥
विषार्शःकृमिसम्भूते हिता चोभयशर्म्मदा ।
छर्दिमूर्च्छातृडाद्यांश्च साधयेदविरोधतः ॥
समवाये तु दोषाणां पूर्व्वं पित्तमुपाचरेत् ।
ज्वरे चैवातिसारे च सर्व्वत्रान्यत्र मारुतं ॥
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥
कर्म्मजा व्याधयः केचिद्दोषजाः सन्ति चापरे ।

कर्म्मदोषोद्भवाश्चान्ये कर्म्मजास्त्वहेतुकाः ॥
नश्यन्ति तत्क्रियाभिस्ते क्रियाभिः कर्म्मसङ्क्षये ।
शाम्यन्ति दोषसम्भूता दोषसंचयहेतुभिः ॥
तेषामल्पनिदाना ये प्रतिकष्टा भवन्ति च ।
मृदवो बहुदोषा वा कर्म्मदोषोद्भवास्तु ते ॥
कर्म्मदोषचयकृतास्तेषां सिद्धिर्विधीयते ।
दुष्यति ग्रहणी जन्तोरग्निसादनहेतुभिः ॥
अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ।
भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥
तस्मात्कार्य्यः परीहारस्त्वतीसारे विरिक्तवत् ।
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥
षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता ।
पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता ॥
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीश्रितः ।
तस्मात्संदूषिते वह्नौ ग्रहणी सम्प्रदुष्यति ॥
एकशः सर्व्वशश्चैव दोषैरत्यर्थमूर्च्छितैः ।
सा दुष्टा बहुशोभुक्तमाममेव विमुञ्चति ॥
पक्वं वा सरुजं पूति मुहुर्ब्बद्धं मुहुर्द्रवं ।
ग्रहणीरोगमाहुस्तमायुर्व्वेदविदो जनाः ॥
तस्योत्पत्तौ विदाहान्नसदनालस्यतृट्क्लमाः ।
बलक्षयोऽरुचिः कासः कर्णक्ष्वेडान्त्रकूजनं ॥

अथ जाते भवेज्जन्तुः शूनपादकरः कृशः।
पर्व्वरुग्लौल्यतृट्छर्द्दिज्वरारोचकदाहवान् ॥
उद्गिरेच्छुक्तितिक्ताम्ललोहधूमामगन्धिकं।
प्रसेकमुखवैरस्यतमकारुचिपीडितः ॥
वाताच्छूलाधिकैः पायुहृत्पार्श्वोदरमस्तकैः ॥
पित्तात्सदाहैर्गुरुभिः कफात्त्रिभिस्त्रिलक्षणैः।
दोषवर्णनखैस्तद्वद्विण्मूत्रनयनाननैः ॥
हृत्पाण्डूदरगुल्मार्शःप्लीहाशङ्की च मानवः।
यथादोषोच्छ्रयन्तस्य विशुद्धस्य यथाक्रमं ॥
पेयादिं वितरेत्सम्यग्दीपनीयोपसम्भृतं।
ततः पाचनसङ्ग्राहिदीपनीयगणद्वयं ॥
पिबेत्प्रातःसुरारिष्टस्नेहमूत्रसुखाम्बुभिः।
तक्रेण वाथ तक्रं वा केवलं हितमुच्यते ॥
कृमिगुल्मोदरार्शोघ्नीः क्रियाश्चात्रावचारयेत् ॥
चूर्णं हिंग्वादिकं चात्र घृतं वा प्लीहनाशनं।
कल्केन मगधादेश्च चाङ्गेरीस्वरसेन वा ॥
चतुर्गुणेन दध्ना च घृतं सिद्धं हितं भवेत्।
सर्व्वथा दीपनं सर्व्वं ग्रहणीरोगिणां हितं ॥
ज्वरादीनविरोधाच्च साधयेत्स्वैश्चिकित्सितैः।

---

॥ एकचत्वारिंशत्तमोऽध्यायः ॥

अथातः शोषप्रतिषेधं व्याख्यास्यामः ॥

अनेकरोगानुगतो बहुरोगपुरोगमः ।
दुर्व्विज्ञेयो दुर्न्निवारः शोषो व्याधिर्म्महाबलः ॥
संशोषणाद्रसादीनां शोष इत्यभिधीयते ।
क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते पुनः ॥
राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः ।
तस्मात्तं राजयक्ष्मेति केचिदाहुर्म्मनीषिणः ॥
संशोषैर्ज्जायते दोषैरिति केचिदहन्ति हि ।
एकादशानामेकस्मिन् सान्निध्यात्तन्त्रयुक्तितः ॥
क्रियाणां चाविभागेन शोषोत्पादनेन च ।
एक एवमतः शोषः सन्निपातात्मको ह्यतः ॥
उद्रेकात्तत्र लिङ्गानि दोषाणां निपतन्ति हि ।
क्षयाद्वेगप्रतीघाताद्घायासाद्विषमाशनात् ॥
जायते कुपितैर्द्दोषैर्व्याप्तदेहस्य देहिनः ।
कफप्रधानैर्द्दोषैर्हि रुद्धेषु रसवर्त्मसु ॥
अतिव्यवायिनोवापि क्षीणे रेतस्यनन्तरा ।
क्षीयन्ते धातवः सर्व्वे ततः शुष्यति मानवः ॥
भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनं ।
स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥
स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः ।

ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च।
कासः कण्ठस्य चोध्वंसो विज्ञेयः कफकोपतः ॥
एकादशभिरेतैर्वा षड्भिर्वापि समन्वितं।
कासातीसारपार्श्वार्त्तिस्वरभेदारुचिज्वरैः ॥
त्रिभिर्वा पीडितं लिङ्गैर्ज्वरकासासृगामयैः।
जह्याच्छोषार्द्दितं जन्तुमिच्छन् सुविपुलं यशः ॥
व्यवायशोकस्थाविर्य्यव्यायामाध्वोपवासतः।
व्रणोरःक्षतपीडाभ्यां शोषानन्ये वदन्ति हि ॥
व्यवायशोषः शुक्रस्य क्षयलिङ्गैरुपद्रुतः।
पाण्डुदेहो यथा पूर्व्वं क्षीयन्ते चास्य धातवः ॥
प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः।
विना शुक्रक्षयकृतैर्व्विकारैरभिलक्षितः ॥
जराशोषी कृशो मन्दस्वल्पबुद्धिबलेन्द्रियः।
श्वसनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः ॥
ष्ठीवति श्लेष्मणा हीनं तथैवारतिपीडितः।
सम्प्रस्नुतास्यनासाक्षः शुष्करूक्षमलच्छविः ॥
अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥
व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः।
उरःक्षतकृतैर्लिङ्गैः संयुक्तश्च क्षतादिना ॥

रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।
व्रणितस्य भवेच्छोषः सचासाध्यतमस्त्वतः ॥
व्यायामभाराध्ययनैरभिघातातिमैथुनैः ।
कर्म्मणा चाप्युरस्येन वक्षो यस्य विदारितं ॥
तस्योरसि क्षते रक्तं पूयः श्लेष्मा च गच्छति ।
कासमानश्छर्दयेच्च पीतरक्तासितारुणं ॥
सन्तप्तवक्षाः सोऽत्यर्थं दूयनात्परिताम्यति ।
दुर्गन्धवदनोच्छ्वासो भिन्नवर्णस्वरो नरः ॥
केषाञ्चिदेव शोषो हि कारणैर्भेदमागतः ।
न तत्र दोषलिङ्गानां समस्तानां निपातनं ॥
क्षयाएव हि ते ज्ञेयाः प्रत्येकं धातुसंक्षयात् ।
चिकित्सितं तु तेषां हि प्रागुक्ते धातुसंक्षये ॥
श्वासाङ्गसादकफसंस्रवतालुशोष
च्छर्द्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्येत्
च्छुष्कांस्तरून्पवनधूमदवार्दितांश्च ॥
महाशनं क्षीयमाणमतीसारनिपीडितं ।

शूनमुष्कोदरं चैव यच्चिणं परिवर्ज्जयेत् ॥
उपाचरेदात्मवन्तं दीप्ताग्निमकृशं नवं ।
क्षिरादिवर्गसिद्धेन घृतेनाजाविकेन च ॥
स्निग्धस्य मृदुकर्त्तव्यमूर्द्ध्वञ्चाधश्च शोधनं ।
आस्थापनं तथाकार्य्यं शिरसश्च विरेचनं ॥
यवगोधूमशालीश्च रसैर्भुञ्जीत शोधितः ।
दृढेऽग्नौ बृंहयेच्चापि निवृत्तोपद्रवं नरं ॥
व्यवायशोषिणं प्रायो भजन्ते वातजा गदाः ।
बृंहणीयो विधिस्तस्मै हितः स्निग्धोऽनिलापहः ॥
काकानुलूकान्नकुलान् विडालान् गण्डूपदान् व्यालबिलेशयाखून्।
गृध्रांश्च दद्याद्विविधैः प्रकारैः ससैन्धवान्सर्षपतैलभृष्टान् ॥
देयानि मांसानि च जाङ्गलानि मुद्गाढकीसूपरसाश्च हृद्याः ॥
खरोष्ट्रनागाश्वतराश्वजानि देयानि मांसानि सुकल्पितानि ।
मांसोपदंशांश्च पिबेदरिष्टान्माध्वीकयुक्ता मदिराश्च सेव्याः ॥
अर्कामृताचारजलोषितेभ्यः कृत्वा यवेभ्यो विविधांश्च भक्ष्यान्।
खादेत् पिबेत्सर्प्पिरजाविकं वा छागो यवाग्वा सह भक्तकाले॥
सर्प्पिर्मधुभ्यां त्रिकटु प्रलिह्याच्चव्याविडङ्गोपहितं क्षयार्त्तः ।
मांसादमांसेषु घृतञ्च सिद्धं शोषापहं चौद्रकणासमेतं ॥
द्राक्षासितामागधिकावलेहः सक्षौद्रतैलः क्षयरोगघाती ।
घृतेन चाजेन समाक्षिकेन तुरङ्गगन्धातिलमाषचूर्णं ॥
सिताश्वगन्धामगधोद्भवानां चूर्णं घृतं क्षौद्रयुतं प्रलिह्यात् ।

क्षीरं पिबेद्वाप्यथ वाजिगन्धाविपक्वमेवं लभते च पुष्टिं ॥
तदुत्थितं क्षीरघृतं सिताढ्यं प्रातः पिबेद्वाथ पयोऽनुपानं ।
उत्सादने चापि तुरगङ्गगन्धा योज्या यवास्चैव पुनर्नवे च॥
क्वत्स्ने वृषे तत्कुसुमैश्च सिद्धं सर्प्पिः पिबेत्क्षौद्रयुतं हिताशी ।
यक्ष्माणमेतत्प्रबलञ्च कासं श्वासञ्च हन्यादपि पाण्डुताञ्च ॥
शकृद्रसा गोऽश्वगजाव्यजानां क्वाथामिताश्चापि तथैव भागैः।
मूर्व्वाहरिद्राखदिरद्रुमाणां क्षीरस्य भागस्त्वपरो घृतस्य ॥
भागान् दशैतान् विपचेद्विधिज्ञो दत्वा त्रिवर्गं मधुरञ्च कल्कं ।
कटुत्रिकञ्चैव सभद्रदारु घृतोत्तमं यक्ष्मनिवारणाय॥
द्वे पञ्चमूल्यौ वरुणं करञ्जं भल्लातकं बिल्वपुनर्न्नवे च।
यवान्कुलत्थान्बदराणि भार्गीं पाठां ऊताश्चं समहोकदम्बं ॥
क्वत्वा कषायं विपचेद्धि तस्य षड्भिर्हि पात्रैर्घृतपात्रमेकं ।
व्योषं महावृत्तपयोऽभयाञ्च चव्यं सुराख्यं लवणोत्तमञ्च ।
एतद्धि शोषं जठराणि चैव हन्यात्प्रमेहांश्च सहानिलेन ॥
गोश्वाव्यजैभैणखरोष्ट्रजाजैः शकृद्रसक्षीररसक्षतोत्थैः।
द्राक्षाश्वगन्धामगधासिताभिः सिद्धं घृतं यक्ष्मविकारहारि ॥
एलाजमोदामलकाभयाक्षगायत्र्यरिष्टासनशालसारान् ॥
विडङ्गभल्लातकचित्रकोग्राकटुत्रिकाम्भोदसुराह्वजाश्च।
पक्वा जले तेन पचेद्धि सर्प्पिस्तस्मिन् सुसिद्धे त्ववतारिते च॥
त्रिंशत्पलान्यत्र सितोपलाया दत्वा तुगाक्षीरिपलानि षट्च।
प्रस्थे घृतस्य द्विगुणञ्च दद्यात्क्षौद्रं ततो मन्थहतं विदध्यात् ॥

पलं पलं प्रातरतः प्रलिह्यात्पश्चात्पिबेत्क्षीरमतन्द्रितश्च ।
एतद्धि मेध्यं परमं पवित्रं चक्षुष्यमायुष्यमथो यशस्यं ॥
यक्ष्माणमाशु व्यपहन्ति चैतत्पाण्ड्वामयश्चैव भगन्दरञ्च ।
श्वासञ्च हन्ति स्वरभेदकासहृत्प्लीहगुल्मग्रहणीगदांश्च ॥
न चात्र किञ्चित्परिवर्ज्जनीयं रसायनञ्चैतदुपास्यमानं ।
प्लीहोदरोक्तं विहितं च सर्पिः क्षीणेऽव चान्यानि हितानि चात्र॥
उपद्रवांश्च स्वरवैकृतादीन् जयेद्यथास्वं प्रसमीक्ष्य शास्त्रं ।
अजाशकृन्मूत्रपयोघृताद्ध्ञ्शालयानि प्रतिसेवमानः ॥
स्नानादिनानाविधिना जहाति मासादशेषं नियमेन शोषं ।
रसोनयोगं विधिवत्क्षयार्त्तः क्षीरेण वा नागबलाप्रयोगं ॥
सेवेत वा मागधिकाविधानं तथोपयोगं जतुनोऽश्मजस्य ।
शोकं स्त्रियं क्रोधमसूयनञ्च त्यजेदुदारान्विषयान्भजेत ॥
वैद्यान् द्विजातीं स्त्रिदशान् गुरूंश्च वाचश्च पुण्याः शृणुयाद्द्विजेभ्यः।

---

॥ द्विचत्वारिंशत्तमोऽध्यायः ॥

अथातो गुल्मप्रतिषेधं व्याख्यास्यामः ॥
यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागताः ।
जनयन्ति नृणां गुल्मं स पञ्चविध उच्यते ॥
हृद्वस्त्योरन्तरे ग्रन्थिः सञ्चारी यदि वाचलः ।
चयापचयवान्वृत्तः स गुल्म इति कीर्त्तितः ॥
पञ्च गुल्माश्रया नृणां पार्श्वे हृन्नाभिवस्तयः ।

कुपितानिलमूलत्वाद्गूढमूलोदयादपि ॥
गुल्मवद्वा विशालत्वाद्गुल्म इत्यभिधीयते।
स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः॥
अन्तःसरति यस्माच्च न पाकमुपयात्यतः।
स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः॥
पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः।
सदनं मन्दता वह्नेराटोपोऽन्त्रविकूजनं ॥
विण्मूत्रानिलसङ्गश्च सौहित्यासहता तथा ।
द्वेषोऽन्ने वायुरूर्द्ध्वश्च पूर्व्वरूपेषु गुल्मिनां ॥

हृत्कुक्षिशूलं मुखकण्ठशोषो वायोर्निरोधो विषमाग्निता च ।
ते ते विकाराः पवनात्मकाश्च भवन्ति गुल्मेऽनिलसम्भवे तु ॥
स्वेदज्वराहारविदाहदाहास्तृष्णाङ्गरागः कटुवक्रता च ।
पित्तस्य लिङ्गान्यखिलानि यानि पित्तात्मके तानि भवन्ति गुल्मे॥
स्तैमित्यमन्नेऽरुचिरङ्गसादश्छर्दिःप्रसेको मधुरास्यता च।
कफस्य लिङ्गानि च यानि तानि भवन्ति गुल्मे कफसम्भवे तु ॥
सर्व्वात्मकः सर्व्वविकारयुक्तः सोऽसाध्य उक्तः क्षतजश्च वक्ष्ये ।
नवप्रसूताऽहितभोजना या याचामगर्भं विसृजेदृतौ वा ॥
वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहं ।
पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध॥
न स्पन्दते नोदरमेति वृद्धिं भवन्ति लिङ्गानि च गर्भिणीनां।
तं गर्भकालातिगमे चिकित्स्यमसृग्भवं गुल्ममुशन्ति तज्ज्ञाः॥

वातगुल्मार्द्दितं स्निग्धं युक्तं स्नेहविरेचनैः ।
उपाचरेद्यथाकालं निरूहैः सानुवासनैः ॥
पित्तगुल्मार्द्दितं स्निग्धं काकोल्यादिघृतेन तु ।
विरिक्तं मधुरैर्योगैर्न्निरूहैः समुपाचरेत् ॥
श्लेष्मगुल्मार्द्दितं स्निग्धं पिप्पल्यादिघृतेन तु ।
तीक्ष्णैर्व्विरिक्तं तद्रूपैर्न्निरूहैः समुपाचरेत् ॥
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ।
पित्तवद्रक्तगुल्मिन्या नार्य्याः कार्य्यः क्रियाविधिः ॥
विशेषमपरं चास्याः शृणु रक्तविभेदनं ।
पलाशभस्मतोयेन सिद्धं सर्प्पिः प्रयोजयेत् ॥
दद्यादुत्तरवस्तिञ्च पिप्पल्यादिघृतेन तु ।
उष्णैर्व्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः ॥
आनूपौदकमज्जानो वसा तैलं घृतं दधि ।
विपक्वमेकतः शस्तं वातगुल्मेऽनुवासनं ॥
जाङ्गलैकशफानान्तु वसा सर्प्पिश्च पैत्तिके ।
तैलं जाङ्गलमज्जान एवं गुल्मे कफोत्थिते ॥
धात्रीफलानां स्वरसे षडङ्गं विपचेद्घृतं ।
शर्कर्करासैन्धवोपेतं तद्धितं वातगुल्मिने ।
चित्रकव्योषसिन्धूत्थपृथ्वीकाचव्यदाडिमैः ।
दीप्यकग्रन्थिकाजाजीहवुषाधान्यकैः समैः ॥
दध्यारनालवदरमूलकस्वरसैर्घृतं ।

तत्पिबेदातगुल्माग्निदौर्व्वल्याटोपशूलनुत्॥
हिङ्गुसौवर्च्चलाजाजीविडदाडिमदीप्यकैः ।
पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः ॥
शटीवचाजगन्धैलासुरसैश्च विपाचितं ।
शूलानाहहरं सर्प्पिर्द्दध्ना चानिलगुल्मिनां ॥
विडदाडिमसिन्धूत्थजतुभुग्व्योषजीरकैः ।
हिङ्गुसौवर्च्चलक्षाररुग्वृक्षाम्लाम्लवेतसैः ॥
वीजपूररसोपेतं सर्प्पिर्दधिचतुर्गुणं ।
साधितं दाधिकं नाम गुल्मह्रत्प्लीहशूलजित्॥
रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितं ।
सुरारनालदध्यम्लमूलकस्वरसैः सह ॥
व्योषदाडिमवृक्षाम्लयवानीचव्यसैन्धवैः ॥
हिंग्वम्लवेतसाजाजीदीप्यकैश्च समांशिकैः ।
सिद्धङ्गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान्॥
कासापस्मारमन्दाग्निप्लीहशूलानिलाञ्जयेत् ।
दधिसौवीरकं सर्प्पिः क्वाथो मुद्गकुलत्थजौ ॥
पञ्चाढकानि विपचेदावाप्य द्विपलान्यथ ।
सौवर्च्चलं स्वर्जिकाञ्च देवदार्व्वथ सैन्धवं॥
वातगुल्मापहं सर्प्पिरेतद्दीपननेव च ।
तृणमूलकषाये तु जीवनीयैः पचेद्घृतं॥
न्यग्रोधादिगणे वापि गणे वाप्युत्पलादिके ।

रक्तपित्तोत्थितं घ्नन्ति घृतान्येतान्यसंशयं ॥
आरग्वधादौ विपचेद्दीपनीययुतं घृतं ।
क्षारवर्गे पचेच्चान्यत्पचेन्मूत्रगणेऽपरं ॥
घ्नन्ति गुल्मं कफोद्भूतं घृतान्येतान्यसंशयं ।
यथादोषोच्छ्रयञ्चापि चिकित्सेत्सान्निपातिकं ॥
चूर्णं हिंग्वादिकं वापि घृतं वा क्षीदनाशनं ।
पिबेद्गुल्मापहं काले सर्प्पिस्तैल्वकमेव वा ॥
तिलेक्षुरकपालाशसार्षपं यवनालजं ।
भस्म मूलकजञ्चापि गोजाविखरहस्तिनां ॥
मूत्रेण महिषीणाञ्च पालिकैश्चावचूर्णितैः ।
कुष्ठसैन्धवयष्ट्याह्वनागरक्रिमिघातिभिः ॥
साजमोदैश्च दशभिः सामुद्राच पलैर्युतं ।
अयः पात्रेऽग्निनाल्पेन पक्का लेह्यमयोद्धरेत् ॥
तस्य मात्रां पिबेद्धा सुरया सर्पिषापि वा ।
धान्याम्लेनोष्णतोयेन कौलत्थेन रसेन वा ॥
गुल्मं वातविकारांश्च क्षारोऽयं हन्त्यसंशयं ।
स्वर्जिकाकुष्ठसहितः क्षारः कैतकजोऽपि वा ॥
तैलेन शमयेत्पीतो गुल्मं पवनसम्भवं ।
पीतं सुखाम्बुना वापि स्वर्जिकाकुष्ठसैन्धवं ॥
वृश्चीकमुरुवूकञ्च वर्षाभूद्दहतोदयं ।
चित्रकञ्च जलद्रोणे पक्कापादावशेषितं ॥

मागधीचित्रकक्षौद्रलिप्ते कुम्भे निधापयेत्।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतं ॥
तुषोषितं दशाहन्तु जीर्णभक्तः पिबेन्नरः।
अरिष्टोऽयं जयेद्गुल्ममविपाकमरोचकं ॥
पाठानिकुम्भरजनीत्रिकटुत्रिफलाग्निकं।
लवणं वृचवीजञ्च तुल्यं स्यादनवं गुडं॥
पथ्याभिः सहितं चूर्णं गवां मूत्रयुतं पचेत्।
गुटिकास्तद्घनीभूतं कृत्वा खादेदभुक्तवान्॥
गुल्मप्लीहाग्निसादांस्ता नाशयेयुरशेषतः।
हृद्रोगं ग्रहणीदोषं पाण्डुरोगञ्च दारुणं ॥
सशूले सोन्नतस्यन्दे दाहपाकरुगण्विते ।
गुल्मे रक्तं जलौकोभिः सिरामोक्षेण वा हरेत्॥
सुखोष्णा जाङ्गलरसाः सुस्निग्धा व्यक्तसैन्धवाः।
कटुत्रिकसमायुक्ता हिताः पाने च गुल्मिनां॥
पेया वातहरैः सिद्धाः कौलत्थाः संस्कृता रसाः।
खलाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः॥
बद्धवर्च्चोऽनिलानान्तु सार्द्रकं क्षीरमिष्यते।
कुम्भीपिण्डेष्टकास्वेदान्कारयेत्कुशलो भिषक्॥
गुल्मिनः सर्व्वएवोक्ता दुर्व्विरेच्यतमा भृशं।
अतश्चैतांस्तु सुस्विन्नान्स्रंसनेनोपपादयेत्॥
विलेपनाभ्यञ्जनानि तथा संवहनानि च।

उपनाहाश्च कर्त्तव्याः सुखोष्णाः शाल्वणादयः ॥
उदरोक्तानि सर्प्पींषि चूर्णवर्त्तिक्रियास्तथा।
लवणानि च योज्यानि यान्युक्तान्युदरामये ॥
वातवर्चोनिरोधे तु सामुद्रार्द्रकसर्षपैः।
कृत्वा पायौ विधातव्या वर्त्तयो मरिचोत्तराः॥
दन्तीचित्रकमूलेषु तथा वातहरेषु च।
कुर्य्यादरिष्टान् सर्व्वांश्च सूत्रस्थाने यथेरितान् ॥
खादेद्वाप्यङ्कुरान् भृष्टान् पूतीकनृपवृक्षजान्।
ऊर्द्धवातमनुष्यश्च गुल्मिनं न निरूहयेत् ॥
पिबेन्नृत्ननागरं वा सगुडां वा हरीतकीं।
गुग्गुलुं त्वृत्तां दन्तीं द्रवन्तीं सैन्धवं वचां ॥
मूत्रमद्य पयोद्राचारसैर्व्वा ब्य बलाबलं ॥
एवं पीलूनि पिष्टानि पिबेत्सलवणानि तु।
पिप्पलीपिप्पलीमूलचव्यचित्रकसैन्धवैः ॥
युक्ता हन्ति सुरा गुल्मं शीघ्रं काले प्रयोजिता।
बद्धविण्मारुतोगुल्मी भुञ्जीत पयसा यवान्॥
कुल्माषान्वा बहुस्नेहान् भक्षयेल्लवणोत्तरान्।
अथास्योपद्रवः शूलः कथञ्चिदुपजायते ॥
शूलं निखानितमिव सुखं येन न वेत्त्यसौ।
तत्र विण्मूत्रसंरोधः कृच्छ्रोच्छ्वासः स्थिराङ्गता ॥
तृष्णा दाहो भ्रमोऽन्नस्य विदग्धपरिवृद्धता।

रोमहर्षोऽरुचिश्छर्द्दिर्भुक्तद्विड्विट्जडाङ्गता ॥
वाय्वादिभिर्यथासङ्ख्यं मिश्रैर्वा वीक्ष्य योजयेत् ।
पथ्यात्रिलवणं चारं हिङ्गुतुम्बुरुपौष्करं ॥
यवान्यथ हरिद्रा च विडङ्गान्यम्लवेतसं ।
विदारी त्रिफला भीरु शृङ्गाटी गुडशर्करा ॥
काश्मरीफलयष्ट्याह्वपरूषकहिमानि च ।
षड्ग्रन्थातिविषादारुपथ्यामरिचवृचकान् ॥
कृष्णामूलकचव्यञ्च नागरचारचित्रकान् ।
उष्णाम्लकाञ्जिकचोरतोयैः श्लोकसमापनात् ॥
यथाक्रमं विमिश्रांश्च द्वन्द्वे सर्व्वांश्च सर्व्वजे ।
तथैव सेकावगाहप्रदेहाभ्यङ्गभोजनं ॥
शिशिरोदकपूर्णानां भाजनानाञ्च धारणं ।
वमनोन्मर्द्दनस्वेदलङ्घनचपणक्रियाः ॥
स्नेहादिश्च क्रमः सर्व्वो विशेषेणोपदिश्यते ।
वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलं ।
न खादेदालुकञ्चल्मो मधुराणि फलानि च ॥
विना गुल्मेन यच्छूलं गुल्मस्थानेषु जायते ।
निदानं तस्य वक्ष्यामि रूपञ्च सचिकित्सितं ॥
वातमूत्रपुरीषाणां विग्रहादतिभोजनात् ।
अजीर्णाध्यशनायासविरुद्धान्नोपसेवनात् ॥
पानीयपानात्तुत्काले विरूढानाञ्च सेवनात् ।

पिष्टान्नशुष्कमांसानामुपयोगात्तथैव च ॥
एवंविधानां द्रव्याणामन्येषां चोपसेवनात् ।
वायुः प्रकुपितः कोष्ठे शूलं सञ्जनयेद्भृशं ॥
निरुच्छ्वासो भवेत्तेन वेदनापीडितो नरः ।
शङ्कुस्फोटनवत्तस्य यस्मात्तीव्राश्च वेदनाः ॥
शूलासक्तस्य लक्ष्यन्ते तस्माच्छूलमिहोच्यते ।
निराहारस्य यस्यैव तीव्रं शूलमुदीर्य्यते ॥
प्रस्तब्धगात्रो भवति कृच्छ्रेणोच्छ्वसितीव च ।
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥
एतैर्लिङ्गैर्व्विजानीयाच्छूलं वातसमुद्भवं ।
तृष्णा दाहो मदो मूर्च्छा तीव्रं शूलं तथैव च ॥
शीताभिकामो भवति शीतेनैव प्रशाम्यति ।
एतैर्लिङ्गैर्व्विजानीयाच्छूलम्पित्तसमुद्भवं ॥
शूलेनोत्पीड्यमानस्य हृल्लास उपजायते ।
अतीव पूर्णकोष्ठत्वं तथैव गुरुगात्रता ॥
एतच्छ्लेष्मसमुत्थस्य शूलस्योक्तं निदर्शनं ।
सर्व्वाणि दृष्ट्वा रूपाणि निर्द्दिशेत्सान्निपातिकं ॥
सन्निपातसमुत्थानमसाध्यं तं विनिर्दिशेत् ।
शूलानां लक्षणं प्रोक्तं चिकित्सां च निबोध मे ॥
आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् ।
तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥

पायसैः कृशरापिण्डैः स्निग्धैर्व्वापिशितैर्हितः ।
वष्टच्छाकेन वा स्निग्धमुष्णं भुञ्जीत भोजनं॥
चिरविल्वाङ्कुरान् वापि तैलभृष्टांस्तु भक्षयेत् ।
वैहङ्गांश्च रसान् स्निग्धान् जाङ्गलान् शूलपीडितः ॥
यथालाभं निषेवेत मांसानि विलशायिनां ।
सुरासौवीरकं शुक्तं मस्तुदश्वित्तथा दधि॥
सकाललवणं पेयं शूले वातसमुद्भवे ।
कुलत्थयूषो युक्ताम्लो लावकीयूषसंस्कृतः ॥
ससैन्धवः समरिचो वातशूलविनाशनः ।
विडङ्गं शिग्रुकम्पिल्लपथ्याश्यामाम्लवेतसान्॥
सुरसामश्वकर्णञ्च सौवर्च्चलयुतान्पिवेत् ॥
मद्येन वातजं शूलं चिप्रमेव प्रशाम्यति ।
पृथ्वीकाजाजिचविकायवानीव्योषचित्रकाः ॥
पिप्पल्यः पिप्पलीमूलं सैन्धवं चेति चूर्णयेत् ।
तानि चूर्णानि पयसा पिवेत्काम्बलिकेन वा ॥
मध्वासवेन चुक्रेण सुरासौवीरकेण वा ।
अथ वै तानि चूर्णानि मातुलुङ्गरसेन वा ॥
तथा वदरयूषेण भावितानि पुनःपुनः ।
तानि हिंगुप्रगाढानि सह शर्करया पिवेत्॥
सह दाडिमसारेण वर्त्तिः कार्य्या भिषग्जिता ।
सा वर्त्तिर्व्वातिकं शूलं चिप्रमेव व्यपोहति॥

गुडतैलेन वा लीढा पीता मद्येन वा पुनः ।
बुभुक्षाप्रभवे शूले लघु सन्तर्पणं हितं ॥
उष्णैः क्षीरैर्यवागूभिः स्निग्धैर्मांसरसैस्तथा ।
वातशूले समुत्पन्ने रूक्षं स्निग्धेन योजयेत् ॥
सुसंस्कृताः प्रदेयाः स्युर्घृतपूरा विशेषतः ।
वारुणीञ्च पिबेज्जन्तुस्तथा सम्पद्यते सुखी ॥
एतद्वातसमुत्थस्य शूलस्योक्तं चिकित्सितं ।
अथ पित्तसमुत्थस्य क्रियां वक्ष्याम्यतः परं ।
स सुखं छर्दयित्वा तु पीत्वा शीतोदकं नरः ॥
शीतलानि च सेवेत सर्व्वाण्युष्णानि वर्ज्जयेत् ।
मणिराजतताम्राणि भाजनानि च सर्व्वशः ॥
वारिपूर्णानि तान्यस्य शूलस्योपरि निक्षिपेत् ।
गुडशालियवाः क्षीरं सर्पिः पानं विरेचनं ॥
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनां ।
रसान्सेवेत पित्तघ्नान् पित्तलानि विवर्ज्जयेत् ॥
पालाशं धान्वनं वापि पिबेद्यूषं सशर्करं ।
परूषकाणि मृद्वीकाखर्ज्जूरोदकजान्यपि ॥
तत्पिबेच्छर्करायुक्तं पित्तशूलनिवारणं ॥
अशने भुक्तमात्रे तु प्रकोपः श्लैष्मिकस्य च ॥
वमनं कारयेत्तत्र पिप्पलीवारिणा भिषक् ।
रूक्षः स्वेदः प्रयोज्यः स्यादन्याश्चोष्णाः क्रिया हिताः ॥

पिप्पलींशृङ्गवेरञ्च श्लेष्मशूले भिषग्जितं।
पाठां वचां त्रिकटुकं तथाच कटुकरोहिणीं॥
चित्रकस्य च निर्यूहं पिबेद्यूषं समार्ज्जकं।
एरण्डफलमूलानि मूलं गोक्षुरकस्य च॥
शालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकां।
दद्याच्छृगालविन्नाञ्च सहदेवां तथैव च॥
महासहां क्षुद्रसहां मूलञ्चेक्षुरकस्य च।
एतत्सम्भृत्य सम्भारं जलद्रोणे विपाचयेत॥
चतुर्भागावशेषन्तु यवक्षारयुतं पिबेत्॥
वातिकं पैत्तिकं वापि श्लैष्मिकं सान्निपातिकं।
प्रसह्य नाशयेच्छूलं छिन्नाभ्रमिव मारुतः॥
पिप्पल्यः स्वर्ज्जिकाक्षारो यवाश्चित्रक एव च।
सैव्यञ्चैव समानीय भस्म कुर्य्याद्विचक्षणः॥
तदुष्णवारिणा पीतं श्लेष्मशूले भिषग्जितं।
रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः॥
स संरुद्धः करोत्याशु ध्मानं गुडुगुडायनं।
सूचीभिरिव निस्तोदः कृच्छ्रोच्छ्वासी तदा नरः॥
नान्नं वाञ्छति नो निद्रामुपैत्यर्त्तिनिपीडितः।
पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः॥
तत्र पुष्करमूलानि हिंगुसौवर्चलं त्रिडं।
सैन्धवं तुम्बुरुपथ्याचूर्णं कृत्वा तु पाययेत्॥

पार्श्वहृद्बस्तिशूलेषु यवक्षाथेन संयुतं ।
सर्पिः सौहिदरोक्तं वा घृतं वा हिंगुसंयुतं॥
वीजपूरकसारं वा पयसा सह साधितं।
एरण्डतैलमथ वा मद्यमस्तुपयोरसैः ॥
भोजयेचापि पयसा जाङ्गलेन रसेन वा।
प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः ॥
तदास्य भोजनं भुक्तं सोपस्तम्भं न पच्यते ।
उच्छ्वसित्यामशक्तता शूलेनाहन्यते मुहुः ॥
नैवासने न शयने तिष्ठन्न लभते सुखं।
कुक्षिशूल इतिख्यातो वातादामसमुद्भवः ॥
वमनं कारयेत्तत्र लङ्घयेद्वा यथावलं।
संसर्गपाचनं कुर्य्याद्द्रव्यैर्दीपनसंयुतैः ॥
नागरं दीप्यकं चव्यं हिंगुसौवर्च्चलं विडं।
मातुलुङ्गास्य वीजानि तथा श्यामोरुवूकयोः ॥
वृहत्याः कण्टकार्य्याश्च क्वाथं शूलहरं पिवेत्।
वचा सौवर्चलं हिंगु कुष्ठं सातिविषाभया ॥
कुटजस्य च वीजानि सद्यःशूलहराणि तु ।
विरेचनं प्रयुञ्जीत ज्ञात्वा दोषवलावलं॥
स्नेहवस्तीन्निरूहांश्च कुर्य्याद्दोषनिवर्हणं।
उपनाहाः स्नेहसेका धान्याम्लपरिसेचनं।
कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः॥

हृदिस्थः कुरुते शूलमुच्छ्वासरोधकं परं।
स हृच्छूल इतिख्यातो रसमारुतसम्भवः॥
तत्रापि कर्म्माभिहितं यदुक्तं हृद्विकारिणां।
संरोधात्कुपितो वायुर्व्वस्तिमावृत्य तिष्ठति॥
वस्तिवंचणनाभीषु ततः शूलोऽस्य जायते।
विण्मूत्रवातसंरोधो वस्तिशूलः स मारुतात्॥
नाभ्यां वंचणपार्श्वेषु कुचौ मेढ्रान्त्रमर्द्दकः।
मूत्रमावृत्य गृह्णाति मूत्रशूलः समारुतात्॥
वायुः प्रकुपितो यस्य रुचाहारस्य देहिनः।
मलं रुणद्धि कोष्ठस्थं मन्दीकृत्य तु पावकं॥
शूलं सञ्जनयंस्तीव्रं स्रोतांस्यावृत्य तस्य हि।
दक्षिणं यदि वा वामं कुक्षिमादाय जायते॥
सर्व्वत्र वर्द्धते क्षिप्रं शूलं तत्र सघोषवत्।
पिपासा वर्द्धते तीव्रा भ्रमो मूर्च्छा च जायते॥
उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति।
विट्शूलमेतज्जानीयाद्भिषक्परमदारुणं॥
क्षिप्रं दोषहरं कार्य्यं भिषजा साधु जानता।
स्वेदनं वमनञ्चैव निरूहाः स्नेहवस्तयः॥
पूर्व्वोद्दिष्टान्पाययेत योगान् कोष्ठविशोधनान्।
उदावर्त्तहराश्चास्य क्रियाः सर्व्वाः सुखावहाः॥
अतिमात्रं यदा भुक्तं पावके मृदुतां गते।

स्थिरीभूतं तु तत्कोष्ठे वायुराहृत्य तिष्ठति ॥
अविपाकगतं चान्नं शूलं तीव्रं करोत्यति ।
मूर्च्छाध्मानं विदाहश्च हृदुत्क्लेशो विलम्बिका ॥
विरिच्यते छर्दयति कम्पतेऽथ विमुह्यति ।
क्षाराश्चूर्णानि गुटिकाः शस्यन्ते शूलनाशनाः ॥
गुल्मावस्थाः क्रियाः कार्य्या यथावत्सर्व्वशूलिनां ।

---

॥ त्रिचत्वारिंशत्तमोऽध्यायः ॥

अथातो हृद्रोगप्रतिषेधं व्याख्यास्यामः ॥
वेगाघातोष्णरूक्षान्नैरतिमात्रोपसेवितैः ।
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥
दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।
कुर्व्वन्ति हृदये बाधां हृद्रोगं तं प्रचक्षते ॥
चतुर्व्विधः स दोषैश्च पञ्चमः क्रिमिभिस्तथा ।
पृथग्लिङ्गं प्रवक्ष्यामि चिकित्सितमनन्तरं ॥
आयम्यते मारुतजे हृदयं तुद्यते तथा ।
निर्म्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि च ॥
तृष्णोषादाहचोषाः स्युः पैत्तिके हृदयक्लमः ।
धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥
गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवं ।
माधुर्य्यमपि चास्यस्य बलासावतते हृदि ॥

उत्क्लेशः ष्ठीवनं तोदः शूलो हृल्लासकस्तमः।
अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत्॥
भ्रमक्लमौ सादशोषौ ज्ञेयास्तेषामुपद्रवाः।
क्रिमिजे क्रिमिजातीनां श्लैष्मिकीणाञ्च ये मताः॥
वातोपसृष्टे हृदये वामयेत्स्निग्धमातुरं।
द्विपञ्चमूलक्वाथेन सस्नेहलवणेन तु॥
पिप्पल्येलावचाहिंगुयवभस्मानि सैन्धवं॥
सौवर्च्चलमथो शुण्ठीमजमोदाञ्च चूर्णितं।
फलधान्याम्लकौलत्थदधिमद्यासवादिभिः॥
पाययेत विशुद्धञ्च स्नेहेनान्यतमेन वा।
भोजयेज्जीर्णशाल्यन्नं जाङ्गलैः सघृतैरसैः॥
वातघ्नसिद्धं तैलञ्च दद्याद्वस्तिं प्रमाणतः।
श्रीपर्णीमधुकक्षौद्रशीतोपलजलैर्व्वमेत्।
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतं॥
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान्।
रसैश्च च रसैर्मुख्यैर्जाङ्गलैः सघृतैर्भिषक्॥
सक्षौद्रं वितरेद्वस्तिं तैलं मधुकसाधितं।
वचानिम्बकषायाभ्यां वान्तं हृदि कफात्मके।
चूर्णन्तु पाययेतोक्तं वातजे भोजयेच्च तं।
फलादिमथ मुस्तादिं त्रिफलां वा पिबेन्नरः॥
श्यामात्रिवृत्कल्कयुतं घृतं वापि विरेचनं।

बलातैलैर्विदध्याच्च वस्तिं वस्तिविशारदः ।
क्रिमिहृद्रोगिणं स्निग्धं भोजयेत्पिशितौदनं ॥
दध्ना वा पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ।
सुगन्धिभिः सलवणैर्य्योगैः साजाजिशर्करैः ॥
विडङ्गगाढैर्धान्याम्लं पाययेताप्यनन्तरं ।
हृदयस्थाः पतन्त्येवमधस्तात्क्रिमयो नृणां ॥
यवान्नं वितरेच्चास्य सविडङ्गमतः परं ।

---

॥ चतुश्चत्वारिंशत्तमोऽध्यायः ॥

अथातः पाण्डुरोगप्रतिषेधं व्याख्यास्यामः ॥

व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णं ।
निषेवमाणस्य विदूष्य रक्तं कुर्वन्ति दोषास्त्वचि पाण्डुभावं ॥
पाण्ड्वामयोऽष्टार्द्धविधः प्रदिष्टः पृथक् समस्तैर्युगपच्च दोषैः ।
सर्व्वेषु चैतेष्विह पाण्डुभावो यतोऽधिकोऽतः खलु पाण्डुरोगः ॥
त्वक्स्फोटनं ष्ठीवनगात्रसादौ मृद्भक्षणं प्रेक्षणकूटशोथाः ।
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥
सकामलापानकिपाण्डुरोगः कुम्भाह्वयो लाघरकोऽलसाख्यः ।
विभाष्यते लक्षणमस्य कृत्स्नं निबोध वक्ष्याम्यनुपूर्व्वशस्तत् ॥
कृष्णेक्षणं कृष्णसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च ।
वातेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथान्यैस्तदुपद्रवैश्च ॥
पीतेक्षणं पीतसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च ।

पित्तेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथान्यैस्तदुपद्रवैश्च ॥
शुक्लेक्षणं शुक्लसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च ।
कफेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथान्यैस्तदुपद्रवैश्च ॥
सर्वात्मके सर्वमिदं व्यवस्येद्वक्ष्यामि लिङ्गान्यथ कामलायाः ।
यो ह्यामयान्ते सहसान्नमम्लमद्यादपथ्यानि च तस्य पित्तं ॥
करोति पाण्डुं वदनं विशेषात्तन्द्राबलत्वं प्रथमोदितांश्च ॥
भेदस्तु तस्याः खलु कुम्भसाह्वं शोफो महांस्तत्र च पर्व्वभेदः ।
ज्वराङ्गमर्दभ्रमसादतन्द्राक्षयान्वितो लाघरकोऽलसाख्यः ॥
तं वातपित्ताभिपरीतलिङ्गं हलीमकं नाम वदन्ति तज्ज्ञाः ।
उपद्रवास्तेष्वरुचिः पिपासा छर्दिर्ज्वरो मूर्द्धरुजाग्निसादः ॥
शोफस्तथा कण्ठगतोऽबलत्वं मूर्च्छा क्लमो हृदयपीडनञ्च ।
साध्यन्तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्धमधश्च शुद्धं ॥
सम्पादयेत् क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णयुतैः प्रयोगैः ।
पिवेद्घृतं वा रजनीविपक्कं यत्त्रैफलं तैल्वकमेव वापि ॥
विरेचनद्रव्यकृतं पिवेद्वा योगांश्च वैरेचनिकान् घृतेन ।
मूत्रे निकुम्भार्द्धपलं विपाच्य पिवेदभीक्ष्णं कुडवार्द्धमात्रं ।
खादेद्गुडं वाप्यभयाविमिश्रमारग्वधादिक्वथितं पिवेद्वा ॥
अयोरजोव्योषविडङ्गचूर्णं लिह्याद्धरिद्रां त्रिफलान्वितां वा ।
सर्पिर्मधुभ्यां विदधीत वापि शास्त्रप्रदर्शाभिहितांश्च योगान् ॥
हरेच्च दोषान् बहुशोऽल्पमात्रान् क्षयेद्धि दोषेष्वतिनिर्हृतेषु ।
धात्रीफलानां रसमिक्षुजञ्च मन्थं पिवेत् क्षौद्रयुतं हिताशी ॥

उभे बृहत्यौ रजनीं शुकाख्यां शाकादनीं चापि सकाकमाचीं।
आदारिविम्बीं सकदम्बपुष्पीं विपाच्य सर्पिर्विंपचेत्कषाये ॥
तत्पाण्डुतां हन्त्युपयुज्यमानं चीरेण वा मार्गधिकां यथाग्नि।
हितञ्च यष्टीमधुकं कषायं चूर्णं समं वा मधुनावलिह्यात् ॥
गोमूत्रयुक्तं त्रिफलादलानां दलायसश्चूर्णमनल्पकालं।
प्रवालमुक्ताञ्जनशङ्खचूर्णं लिह्यात्तथा काञ्चनगैरिकोत्थं ॥
आजं शकृद्वा कुडवप्रमाणं विडं हरिद्रालवणोत्तमञ्च।
पृथक्पलांशानि समग्रमेतच्चूर्णं हिताशी मधुनावलिह्यात् ॥
मण्डूरलोहाग्निविडङ्गपथ्याव्योषांशकः सर्व्वसमानताप्यः।
मूत्रासुतोऽयं मधुनावलेहः पाण्ड्वामयं हन्त्यचिरेण घोरं।
विभीतकायोमलनागराणां चूर्णं तिलानाञ्च गुडस्य मुख्यः।
तक्रानुपानो वटकाप्रयुक्तः चिणोति घोरानपि पाण्डुरोगान् ॥
सावैर्चलं हिङ्गुकिराततिक्तकलायमात्राणि सुखाम्बुना वा।
मूर्व्वाहरिद्रामलकञ्च लिह्यात्स्थितं गवां सप्त दिनानि मूत्रे।
मूलं बलाचित्रकयोः पिबेद्वा पाण्ड्वामयार्त्तोऽचसमं हिताशी ॥
सुखाम्बुना वा लवणेन तुल्यं शिग्रोःफलं चीरभुजोपयोज्यं।
न्यग्रोधवर्गस्य पिबेत् कषायं शीतं सिताचौद्रयुतं हिताशी ॥
शालादिकं चाप्यथसारचूर्णं धात्रीफलं वा मधुनावलिह्यात् ॥
विडङ्गमुस्तत्रिफलाजमोदपट्टषकव्योषविनिर्द्दहन्यः।
चूर्णीकृता वा गुडशर्करेच तथैव सर्पिर्मधुनी शुभे च ॥
सम्भारमेतद्विपचेन्निधाय सारोदके सारवतो गणस्य।

जातश्च लेह्यं मतिमान्विदित्वा निधापयेन्मोचकजे समुद्गे ॥
हन्त्येष लेहः खलु पाण्डुरोगं सशोथमुग्रामपि कामलाञ्च।
सशर्करा कामलिनां त्रिभण्डी हिता गवाक्षी सगुडा च शुण्ठी ॥
कालेयकेचापि घृतं विपक्वं हितं च तत्स्याद्रजनीविमिश्रं।
धातुं नदीजं जतुशैलजं वा कुम्भाह्वये मूत्रयुतं पिवेद्वा ॥
मुत्रस्थितं सैन्धवसम्प्रयुक्तं मासं पिवेद्वापि हि लोहकिट्टं।
दग्ध्वाक्षकाष्ठैर्मलमायसंवा गोमूत्रनिर्व्वापितमष्टवारान् ॥
विचूर्ण्य लीढं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्यात्।
सिन्धूद्भवं वाग्निसमं च कृत्वा सिक्ता च मूत्रे सकृदेव तप्तं ॥
लोहस्य किट्टं बकुशस्य तप्ता निर्व्वाप्य मूत्रे बकुशस्तथैव।
एकीकृतं गोजलपिष्टमेतदेकध्यमावाप्य पचेदुखायां ॥
यथा न दह्येत तथा विशुष्कं चूर्णीकृतं पेयमुदश्विता तत्।
तक्रौदनाशी विजयेत रोगं पाण्डुं तथा दीपयतेऽनलञ्च ॥
द्राक्षागुडुच्यामलकीरसैश्च सिद्धं घृतं लाघरके हितञ्च।
गौडानरिष्टान्मधुशर्कराश्च मूत्रासवान् चारकृतांस्तथैव।
स्निग्धान् रसानामलकैरुपेतान् कोलान्वितान् वापिहि जाङ्गलानां॥
सेवेत शेषाभिहितांश्च योगान् पाण्ड्वामयी शालियवांश्च नित्यं ॥
श्वासातिसारारुचिकासमूर्च्छातृट्छर्दिशूलज्वरशोफदाहान्।
तथा विपाकस्वरभेदसादान् जयेद्यथास्वम्प्रसमीक्ष्य शास्त्रं ॥
अन्तेषु शूनं परिहीनमध्यं म्लानं तथान्तेषु च मध्यशूनं।

गुदेऽथ शेफस्यथ मुष्कयोश्च शूनं प्रताम्यन्तमसंज्ञकल्पं ॥
विवर्ज्जयेत्पाण्डुकिनं यशोर्थी तथातीसारज्वरपोडितञ्च ।

---

॥ पञ्चचत्वारिंशत्तमोऽध्यायः ॥

अथातो रक्तपित्तप्रषेधं व्याख्यास्यामः ॥
क्रोधशोकभयायासविरुद्धान्नातपानलान् ।
कट्वम्ललवणक्षारतीक्ष्णोष्णातिविदाहिनः ॥
नित्यमभ्यसतो दुष्टो रसः पित्तञ्च कोपयेत् ।
विदग्धं स्वगुणैः पित्तं विदहत्याशु शोणितं ॥
ततः प्रवर्त्तते रक्तमूर्द्धञ्चाधो द्विधापिवा ।
आमाशयाद्व्रजेदूर्द्धमधः पक्वाशयाद्व्रजेत् ।
विदग्धयोर्द्वयोश्चापि द्विधाभागं प्रवर्त्तते ।
केचित्तु यकृतः प्लीह्नः प्रवदन्त्यसृजोगतिं ॥
ऊर्द्धं साध्यमधोयाप्यमसाध्यं युगपद्गतं ।
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ॥
लोहगन्धिश्च निश्वासो भवत्यस्मिन्भविष्यति ।
वाह्याहृग्लचणैस्तस्य सञ्ज्ञादोषोचिकृतीर्व्विदुः ॥
दौर्ब्बल्यश्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छाः
भुक्ते चान्ने विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा ।
तृष्णा कण्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनञ्च ॥

द्वेषो भक्तेऽविपाको विरतिरपि रते रक्तपित्तोपसर्गाः ॥
मांसप्रक्षालनाभं क्वथितमिव च यत्कर्द्दमाम्भोनिभं वा
मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभं।
यत्कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकाराः
तद्वर्ज्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥
नादौ संग्राह्यमुद्रिक्तं यदस्रं बलिनो यतः।
तत्पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहं॥
अधः प्रवृत्तं वमनैरूर्द्ध्वमार्गं विरेचनैः।
जयेदन्यतरच्चापि क्षीणस्य शमनैरसृक्॥
अतिप्रवृत्तदोषस्य पूर्व्वं लोहितपित्तिनः।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणं॥
लङ्घितस्य ततः पेयां विदध्यात्स्वल्पतण्डुलां।
तर्प्पणं पाचनं लेहान् सर्प्पींषि विविधानि च॥
द्राक्षामधुककाश्मर्य्यसितायुक्तं विरेचनं।
यष्टीमधुकयुक्तं च सक्षौद्रं वमनं हितं॥
पयांसि शीतानि रसाश्च जाङ्गलाः सतीनयूषाश्च सशालिषष्टिकाः।
पटोलशेलुसुनिषण्णयूथिकावटातिमुक्ताङ्कुरसिन्दुवारजं॥
हितश्च शाकं घृतसंस्कृतं सदा तथैव धात्रीफलदाडिमान्वितं।
रसाश्च पारावतशल्लकूर्म्मजास्तथा यवाग्वोऽभिहिता घृतोत्तराः॥
सन्तानिकाश्चोत्पलवर्गसाधिते क्षीरे प्रशस्ता मधुशर्क्करोत्तमाः।
हिमाः प्रदेहा मधुशर्करश्च ये घृतानि पथ्यानि च रक्तपित्तिनां॥

मधूकशोभाञ्जनकोविदारजैः प्रियङ्गुकायाः कुसुमैश्च चूर्णितैः ।
भिषग्विदध्याच्चतुरः समाक्षिकान् हिताय लेहानसृजः प्रशान्तये ॥
लिह्याच्च दूर्व्वावटजांश्च पल्लवान्मधुद्वितीयान् सितकर्णिकस्य च ।
हितञ्च खर्ज्जूरफलं समाक्षिकं फलानिचान्यान्यपि तद्गुणान्यथ ॥

रक्तातिसारप्रोक्तांश्च योगानत्रापि योजयेत् ।
शुक्लेक्षुकाण्डमापोथ्य नवे कुम्भे हिमाम्भसा ॥
योजयित्वा क्षिपेद्रात्रावाकाशे सोत्पलन्तु तत् ।
प्रातः श्रुतं क्षौद्रयुतं पिवेच्छोणितपित्तवान् ॥
पिवेच्छीतकषायं वा जम्ब्वाम्रार्ज्जुनसम्भवं ।
उडुम्बरफलं पिष्ट्वा पिवेत्तद्रसमेववा ॥
त्रपुषीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना ।
पिवेद्रक्तसमं कल्कं यष्टीमधुकमेव वा ॥
चन्दनं मधुकं रोध्रमेवमेवं समं पिवेत् ।
करञ्जवीजमेवं वा सिताक्षौद्रयुतं पिवेत् ॥
मज्जानमिदङ्गुस्येवं पिवेन्मधुकसंयुतं ।
सुखोष्णं लवणं वीजं कारञ्जन्दधिमस्तुना ॥
पिवेद्वापि त्र्यहं मर्त्यो रक्तपित्ताभिपीडितः ।
रक्तपित्तहराः शस्ताः षडेते योगसत्तमाः ॥
पथ्यास्वेवावपीडेषु घ्राणतः प्रस्रुतेऽसृजि ।
अतिनिस्रुतरक्तोवा क्षौद्रयुक्तं पिवेदसृक् ॥
यकृद्वा भक्षयेदाजमामं पित्तसमायुतं ।

पलाशवृन्तस्वरसे विपक्वं सर्पिः पिबेत्क्षौद्रयुतं सुशीतं ॥
वनस्पतीनां स्वरसैः कृतं वा सशर्करं क्षीरघृतं पिबेद्वा ।
द्राक्षामृणालाश्च पद्मकं सिता पृथक्पलांशान्युदके समावपेत् ।
स्थितं निशान्तद्रुधिरामयं जयेत्पीतं पयो वाम्बुसमं हिताशिनः ॥
तुरङ्गवर्चःस्वरसं समाक्षिकं पिबेत्सिताक्षौद्रयुतं वृषस्य वा ।
लिहेत्तथा वास्तुकबीजचूर्णं क्षौद्रान्वितं तण्डुलशाकजं वा ॥
लिह्याच्च लाजाञ्जनचूर्णमेकमेवं सिताक्षौद्रयुतां तुगाख्यां ।
द्राक्षां सितां तिक्तकरोहिणीञ्च हिमाम्बुना वा मधुकेन युक्तां ।
पथ्यामहिंस्रां रजनीं घृतञ्च लिह्यात्तथा शोणितपित्तरोगी ॥
वासाकषायोत्पलमृत्प्रियङ्गुनेत्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु ॥
गायत्रिजम्ब्वर्ज्जुनकोविदारशिरीषरोध्राशनशाल्मलीनां ।
पुष्पाणि शिग्रोश्च विचूर्ण्य लेह्यो मध्वन्वितः शोणितपित्तरोगे ॥
सक्षौद्रमिन्दीवरभस्म वारि करञ्जबीजं मधुसर्प्पिषोश्च ।
जम्ब्वर्ज्जुनाम्रक्वथितञ्च तोयं घ्नन्ति त्रयः पित्तमसृक्च योगाः ।
मूलानि पुष्पाणि च मातुलुङ्ग्याः पिष्ट्वा पिबेत्तण्डुलधावनेन ॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा ।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करञ्चेक्षुरसं हिमं वा ॥
शीतोपचारं मधुरञ्च कुर्य्याद्विशेषतः शोणितपित्तरोगे ।
द्राक्षाघृतक्षौद्रसितायुतेन विदारिगन्धादिविपाचितेन ॥
क्षीरेण चास्थापनमग्र्यमुक्तं हितं घृतञ्चाप्यनुवासनार्थं ॥

प्रियङ्गुरोध्राञ्जनगैरिकोत्पलैः सुवर्णकालीयकशङ्खचन्दनैः।
सिताश्वगन्धाम्बुदयष्टिकाङ्कयैर्म्मृणालसौगन्धिकतुल्यपेषितैः॥
निरूह्य चैनं पयसा समाचिकैर्घृतप्लुतैः शीतजलाम्बुसेचितं।
चीरौदनं भुक्तमथानुवासयेद्धृतेन यष्टीमधुसाधितेनच॥
अधोवहं शोणितमाशु नाशयेत्तथातिसारं रुधिरस्य दुस्तरं।
विरेकयोगेष्वतिचैव शस्यते वाम्यस्य रक्ते विजिते बलान्वितः॥
एवं विधा उत्तरवस्तयश्च मूत्राशयस्थे रुधिरे विधेयाः।
प्रवृत्तरक्तेषु च पायुजेषु कुर्य्याद्विधानं खलु रक्तपित्ते॥
विधिश्चाप्ययं दरेऽप्येष स्त्रीणां कार्य्यो विजानता।
शस्त्रकर्म्मणि रक्तं वा यस्यातीव प्रवर्त्तते॥
त्रयाणामपि दोषाणां शोणितस्य च सर्व्वशः।
लिङ्गान्यालोक्य कर्त्तव्यं चिकित्सितमनन्तरं॥

---

॥ षट्चत्वारिंशत्तमोऽध्यायः॥

अथातो मूर्च्छाप्रतिषेधं व्याख्यास्यामः।
चीणस्य बहुदोषस्य विरुद्धाहारसेविनः॥
विघातादभिघाताद्वा हीनसत्वस्य वा पुनः।
करणायतनेषूग्रा वाह्येष्वाभ्यन्तरेषु च॥
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः।
हृत्पीडाजृम्भनं ग्लानिः संज्ञानाशो बलस्य च॥
सर्व्वासां पूर्व्वरूपाणि यथास्वमुपलचयेत्।

संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत्॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत्।
मोहो मूर्च्छेति तां प्राहुःषड्विधा सा प्रकीर्त्तिता॥
वातादिभिः शोणितेन मद्येनच विषेणच।
षट्स्वपि तासु पित्तं हि प्रभुत्वेनावतिष्ठते॥
पृथिव्यम्बुस्तमोरूपं रक्तगन्धश्च तन्मयः।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति।
गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः॥
तएव तस्माज्जायन्ते ताभ्याम्मोहा यथेरिताः।
स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः॥
मद्येन विलपन् शेते नष्टविभ्रान्तमानसः।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत्॥
वेपथुस्वप्नतृष्णाः स्युः तमश्च विषमूर्च्छिते।
वेदितव्यन्तीव्रतरं यथास्वं विषलक्षणैः॥
सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलाश्च।
शीतानि पानानिच गन्धवन्ति सर्व्वासु मूर्च्छास्वनिवारितानि॥
सिताप्रियालेक्षुरसप्लुतानि द्राक्षामधूकस्वरसान्वितानि।
खर्ज्जूरकाश्मर्य्यरसैः शृतानि पानानि सर्प्पींषि सजीवनानि॥
सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च।

तथा यवा लोहितशालयश्च मूर्च्छासु पथ्याश्च सदा सतीनाः ॥
भुजङ्गपुष्पं मरिचान्युशीरं कोलस्य मध्यञ्च पिबेत्समानि ।
सतीनतोयेन विसं मृणालं क्षौद्रेण कृष्णां सितया च पथ्यां ॥
कुर्य्याच्च नासावदनावरोधं क्षीरं पिबेद्वाप्यथमानुषीणां ।
मूर्च्छाप्रसक्तां तु शिरोविरेकैर्जयेदभीक्ष्णं वमनैश्च तीक्ष्णैः ॥
हरीतकीक्काथघृतं पिबेद्वा धात्रीफलानां स्वरसैः कृतं वा ।
द्राक्षासितादाडिमलाजवन्ति शीतानि नीलोत्पलपद्मवन्ति ॥
पिबेत्कषायाणि च गन्धवन्ति पित्तज्वरं यानि शमं नयन्ति ।
प्रभूतदोषस्तमसोऽतिरेकात्संमूर्च्छितो नैव विबुध्यते यः ॥
संन्यस्तसंज्ञो भृशदुश्चिकित्स्यो ज्ञेयस्तदा बुद्धिमता मनुष्यः ।
यथामलोष्टं सलिले निषिक्तं समुद्धरेदाश्वविलीनमेव ॥
तद्वच्चिकित्सेत्त्वरया भिषक्तमवेदनं मृत्युवशप्रयातं ।
तीक्ष्णाञ्जनाभ्यञ्जनधूमयोगैस्तथा नखाभ्यन्तरतोत्रपातैः ॥
वादित्रगीतानुनयैरपूर्व्वैर्व्विघट्टनैर्गुप्तफलावघर्षणैः ॥
आभिः क्रियाभिश्च न लब्धसंज्ञः सानाहलालाश्वसनश्च वर्ज्यः ।
प्रभूतसंज्ञं वमनानुलोम्यैस्तीक्ष्णैर्व्विशुद्धं लघुपथ्यभुक्तं ॥
फलत्रिकैश्चित्रकनागराद्यैस्तथाश्मजातात्जतुनः प्रयोगैः ।
सशर्करैर्मासमुपक्रमेत विशेषतो जीर्णघृतं स पाय्यः ॥
यथास्वञ्च ज्वरघ्नानि कषायाण्युपयोजयेत् ।
सर्व्वमूर्च्छापरीतानां विषजानां विषापहं ॥

---

॥ सप्तचत्वारिंशत्तमोऽध्यायः ॥

अथातः पानात्ययप्रतिषेधं व्याख्यास्यामः ॥

मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव च ।
रूक्षमाशुकरञ्चैव व्यवायि च विकाशि च ॥
औष्ण्याच्छीतोपचारं तत्तैक्ष्ण्याद्धन्ति मनोगतिं ।
विशत्यवयवान् सौक्ष्म्याद्वैशद्यात्कफशुक्रनुत् ॥
मारुतं कोपयेद्रौक्ष्यादाशुत्वादाशुकर्म्मकृत् ।
हर्षदञ्च व्यवायित्वाद्विकाशित्वाद्विसर्पति ॥
तदम्लं रसतः प्रोक्तं लघुरोचनदीपनं ।
केचिल्लवणवर्ज्ज्यांस्तु रसानत्रादिशन्ति हि ॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितं ।
भवेदायुःप्रकर्षाय बलायोपचयाय च ।
काम्यता मनसस्तुष्टिर्द्धैर्य्यं तेजोऽतिविक्रमः ॥
विधिवत्सेव्यमानेतु मद्ये सन्निहिता गुणाः ।
तदेवानन्नमन्नेन सेव्यमानममात्रया ॥
कायाग्निनाह्यग्निसमं समेत्य कुरुते मदं ।
मदेन करणानान्तु भावान्यत्वे कृते सति ॥
निगूढमपि भावं स्वम्प्रकाशीकुरुतेऽवशः ।
व्यवस्थश्च मदो ज्ञेयः पूर्व्वो मध्योऽथ पश्चिमः ॥
पूर्व्वे वीर्य्यरतिप्रीतिहर्षभाष्यादिवर्द्धनं ।
प्रलापो मध्यमे हर्षो युक्तायुक्तक्रियास्तथा ॥

विसंज्ञः पश्चिमे शेते नष्टकर्म्मक्रियागुणः ।
श्लैष्मिकानल्पपित्तांश्च स्निग्धान्मात्रोपसेविनः ॥
पानं न बाधतेऽत्यर्थं विपरीतांस्तु बाधते ।
निर्भक्तमेकान्ततएव मद्यं निषेव्यमाणं मनुजेन नित्यं ।
उत्पादयेत् कष्टतमान्विकारानापादयेच्चापि शरीरभेदं ॥
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ।
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥
अत्यम्लभक्ष्यावततोदरेण साजीर्णभुक्तेन तथाबलेन ।
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान् ॥
पानात्ययं परमदम्पानाजीर्णमथापि वा ।
पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणं ॥
स्तम्भाङ्गमर्दहृदयग्रहतोदकम्पाः
पानात्ययेऽनिलकृते शिरसो रुजश्च ।
स्वेदप्रलापमुखशोषणदाहमूर्च्छाः
पित्तात्मके वदनलोचनपीतता च ॥
श्लेष्मात्मके वमथुशीतकफप्रसेकाः
सर्व्वात्मके भवति सर्व्वविकारसम्पत् ।
उष्मा शरीरगुरुता विरसाननत्वं
श्लेष्माधिकत्वमरुचिर्म्मलमूत्रसङ्गः ॥
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा
स्तृष्णारुजा शिरसि सन्धिषु चापि भेदः ।

आध्मानमुद्गिरणमम्लरसो विदाहो
जीर्णस्य पानजनितस्य वदन्ति लिङ्गं ॥
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि
पित्तप्रकोपजनितानि च कारणानि ।
हृद्गात्रतोदवमथुज्वरकण्ठधूम
मूर्च्छाकफस्रवणमूर्द्धरुजो विदाहः ॥
द्वेषः सुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रममुशन्त्यखिलेन धीराः ।
हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमतिपानहतं विजह्यात् ॥
जिह्वौष्ठदन्तमसितं त्वथवापि नीलं
पीते च यस्य नयने रुधिरप्रभे च ।
हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं भजन्ते ॥
तेषां निवारणमिदं हि मयोच्यमानं
व्यक्ताभिधानमखिलेन विधिं निबोध ।
मद्यन्तु चुक्रमरिचार्द्रकदीप्यकुष्ठ
सौवर्चलाद्युतमलं पवनस्य शान्त्यै ॥
पृथ्वीकदीप्यकमहौषधहिङ्गुभिर्वा
सौवर्चलेन च युतं वितरेत्सुखाय ।
आम्रातकाम्रफलदाडिममातुलुङ्गैः

कुर्य्याच्छुभान्यपि च षाडवपानकानि ॥
सेवेत वा फलरसोपहितान्नशादी
नानूपवर्गपिशितान्यपि गन्धवन्ति ।
पित्तात्मके मधुरवर्गकषायमिश्रं
मद्यं हितं समधुशर्करमिष्टगन्धं ॥
पीत्वा च मद्यमपि चेक्षुरसप्रगाढं
निःशेषतः क्षणमवस्थितमुल्लिखेच्च ।
लावैणतित्तिरिरसांश्च पिबेदनल्पा
न्मौद्गान्सुखाय सघृतान्सशितांश्च यूषान् ॥
पानात्यये कफकृते कफमुल्लिखेच्च
मद्येन बिम्बिविदुलोदकसंयुतेन ।
सेवेत तिक्तकटुकांश्च रसानुदारान्
यूषांश्च तिक्तकटुकोपहितान हिताय ॥
पथ्यं यवान्नं विकृतान्यपि जाङ्गलानि
श्लेष्मघ्नमन्यदपि यच्च निरत्ययं स्यात् ।
कुर्य्याच्च सर्व्वमथ सर्व्वभवे विधानं
द्वन्द्वोद्भवे द्वयमवेक्ष्य यथा प्रधानं ॥
सामान्यमन्यदपि यत्सुरमग्र्यमग्र्यं
वक्ष्यामि दक्ष मनसा मदकृत्सुखञ्च ।
त्वङ्नागपुष्पमगधैलमधूकधान्यैः
कृष्णैरजाजिमरिचैश्च कृतं समांशैः ॥

पानं कपित्थरसवारिपरूषकाढ्यं
पानात्ययेषु विधिवत्प्रभुतमम्बरान्ति ।
ह्रीवेरपद्मपरिपेलवसंप्रयुक्तैः
पुष्पैः प्रलिप्य करवोरजलोद्भवैश्च ॥
पिष्टैः सपद्मकयुतैरपि सारिवाद्यैः
सेकं जलैश्च वितरेदमलैः सुशीतैः ।
त्वक् पत्रचोचमरिचैलभुजङ्गपुष्प
श्लेष्मातकप्रसवकल्कगुडैरुपेतं ॥
द्राक्षायुतं घृतनलं मदिरामयार्त्तै
स्तत्पानकं शुचि सुगन्धिनरैर्निषेव्यं ।
पिष्ट्वा पिबेच्च मधुकं कटुरोहिणीञ्च
द्राक्षाञ्च मूलमसकृत् त्रपुसीभवं यत् ॥
कर्प्पासमूलमथ नागबलाञ्च तुल्यां
पीत्वा सुखी भवति साधु सुवर्च्चलाञ्च ।
काश्मर्य्यदारुविडदाडिमपिप्पलीषु
द्राक्षान्वितासु कृतमम्बुनि पानकं यत् ॥
तद्बीजपूरकरसायुतमाशु पीतं
शान्तिं परां मदगदेष्वचिरात्करोति ।
द्राक्षासितामधुकजीरकधान्यकृष्णा
स्विन्नं कृतं हृष्टतया च पिबेत्तथापि ॥
सौवर्च्चलायुतमुदाररसं फलाम्लं

भार्गीशृतेन च जलेन हितावसेकः ।
इक्ष्वाकुधामार्गववृक्षकानि काकाह्वयोडुम्बरिकाश्च दुग्धे ।
विपाच्य तस्याञ्जलिना वमेद्धि मद्यं पिबेदह्नि गते त्वजीर्णे ॥
त्वक्पिप्पलीभुजगपुष्पविडङ्गपेतं
सेवेत हिङ्गुमरिचैलयुतं फलाम्लं ।
उष्णाम्बुसैन्धवयुतास्त्वथ वा विडत्वक्
चव्यैर्लहिङ्गुमगधाफलमूलशुण्ठीः ॥
हृद्यैः खडैरपि च भोजनमत्र शस्तं
द्राक्षाकपित्थफलदाडिमपानकं यत् ।
तत्पानविभ्रमहरं मधुशर्कराढ्य
माम्रातकोलरसपानकमेव वापि ॥
खर्जूरवेत्रककरीरपरूषकेषु
द्राक्षाटरूषसु च क्षतं ससितं हितं वा ।
श्रीपर्णियुक्तमथ वा तु पिबेदिमानि
षष्ठ्याह्वयोत्पलहिमाम्बुविमिश्रितानि ॥
क्षीरिप्रवालविसजीरकनागपुष्प
पत्रैलवालुशिनशारिवपद्मकानि ।
आम्रातभव्यकरमर्दकपित्थकोल
वृक्षाम्लवेत्रफलजीरकदाडिमानि ॥
सेवेत वा मरिचजीरकनागपुष्प
त्वक्पत्रविश्वचविकैलयुतान्नसांश्च ।

सूक्ष्माम्बरस्रुतहिमांश्च सुगन्धिगन्धान्।
पानोद्भवानुदति सन्तगदानशेषान्॥
पञ्चेन्द्रियार्थविषया मृदुपानयोगा
हृद्याः सुखाश्च मनसः सततन्नियोज्याः।
पानात्ययेषु विकटोरुनितम्बवत्यः
पीनोन्नतस्तनभरा नतमध्यदेशाः॥
प्रौढाःस्त्रियोऽभिनवयौवनपीनगात्र्यः
सेव्याश्च पञ्चविषयातिशयस्वभावाः।
पिवेद्रसं पुष्पफलोद्भवं वा सितामधूकन्निसुगन्धियुक्तं।
संचूर्ण्य संयोज्य च नागपुष्पैरजाजिकृष्णामरिचैश्च तुल्यैः॥
वर्षाभुयष्ट्याह्वमधूकलाचालकर्वुदाराङ्कुरजीरकाणि।
द्राक्षाञ्च कृष्णामथ केशरञ्च चीरे समालोड्य पिवेत्सुखोष्णं॥
भवेच्च मद्येन तु येन पातितः प्रकामपीतेन सुरासवादिना।
तदेव तस्मै विधिवत्प्रदापयेद्विपर्य्यये भ्रंशमसौ च गच्छति॥
यथानरेन्द्रोपहतस्य कस्यचिद्भवेत्प्रसादस्तत एव नान्यतः।
विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते।
तस्य पानात्ययोद्दिष्टा विकाराः सम्भवन्ति हि॥
मद्यस्याग्नेयवायव्यौ गुणावम्बुवहानि च।
स्रोतांसि शोषयेयातां तेन तृष्णा प्रजायते॥
पाटलोत्पलकन्देषु मुद्गपर्ण्या च साधितं॥
पिवेन्मागधिकामिश्रं तत्राम्भोहिमशीतलं।

सर्पिस्तैलवसामज्जदधिभृङ्गरसैर्युतं ॥
क्वाथेन विल्वयवयोः सर्व्वगन्धैश्च पेषितैः ।
पक्कमभ्यञ्जने श्रेष्ठं सेके क्वाथः सुशीतलः ॥
रसवन्ति च भोज्यानि यथाखमवचारयेत् ।
पानकानि सुशीतानि हृद्यानि सुरभीनि च ॥
त्वचं प्राप्तस्तु पानोष्मा पित्तरक्ताभिमूर्च्छितः ।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजं ॥
शीतं विधानमत ऊर्द्धमहं प्रवक्ष्ये
दाहप्रशान्तिकरमृद्धिमतां नराणां ।
तत्रादितो मलयजेन हितः प्रदेह
श्चन्द्रांशुहारतुहिनोदकशीतलेन ।
शीताम्बुशीतलतरैश्च शयानमेवं
हारैर्मृणालवलयैरबलाः स्पृशेयुः ॥
भिन्नोत्पलोज्ज्वलहिमे शयने शयीत
पत्रेषु वा सजलविन्दुषु पद्मिनीनां ।
आसादयन्पवनमाहृतमिष्टगन्ध
कह्लारपद्मदलशैवलसञ्चयेभ्यः ॥
शीतैर्व्वनान्तपवनैः परिमृज्यमानः
शीतश्चरेद्वनकाननदीर्घिकासु ।
दाहाभिभूतमथ वा परिषेचयेत्तु
शीतैरुशीरजलचन्दनवारिभिस्तं ॥

विश्राविता हृतमलां नववारिपूर्णां
पद्मोत्पलोज्ज्वलजलामधिवासिताञ्च ।
वापीम्भजेत हरिचन्दनभूषिताङ्गः
कान्ताकरस्पर्शकर्कशरोमकूपः ॥
तत्रैनमम्बुरुहपत्त्रसमैः स्पृशन्त्यः
शीतैः करोरुवदनैः कठिनैः स्तनैश्च ।
तोयावगाहकुशला मधुरस्वभावाः
संहर्षयेयुरबला मधुरैः प्रलापैः ॥
धारागृहे प्रगलितोदकदुर्दिनाभे
क्लान्तः शयीत सलिलानिलशीतकुड्ये ।
गन्धोदकैः सकुसुमैरुपसिक्तभूमौ
पत्राम्बुचन्दनरसैरुपलिप्तकुड्ये ॥
मांसीतमालघनकुङ्कुमपद्मपत्त्र
जात्युत्पलप्रियककेशरपुण्डरीके ।
पुन्नागनागकरवीरकृतोपकारे
तस्मिन्गृहे कमलरेणुहृते शयीत ॥
यत्राहतानिलविकम्पितपुष्पदाम्नि
हेमन्तविन्ध्यहिमवन्मलयाचलानां ।
शीताम्भसां सकदलीहरितद्रुमाणां
उद्भिन्ननीलनलिनाम्बुरुहाकराणां ॥
चन्द्रोदयस्य च कथाः शृणुयान्मनोज्ञा

ग्लानं सुदीनमनसं मनसोऽनुकूलाः।
पीनस्तनोरुजघना घनसारदिग्धाः
ता एवमार्द्रवसनाः सह संविशेयुः॥
श्लिष्टाबलाः शिथिलमेखलहारयष्ट्यः॥
हर्षयेयुःपुनर्नार्य्यः स्वगुणैरहसि स्थिताः।
ताः शैत्याच्छमयेयुश्च पित्तपानात्ययं स्त्रियः।
रक्तपित्ततृषादाहेष्वयमेव विधिः स्मृतः॥
सामान्यतो विशेषन्तु शृणुदाहेष्वशेषतः।
कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ह्यति॥
संचूष्यते दह्यते च ताम्राभस्ताम्रलोचनः।
लोहगन्धाङ्गवदनो वह्निनेवावकीर्य्यते॥
तं विलङ्घ्य विधानेन संसृष्टाहारमाचरेत्।
अप्रशाम्यति दाहे च रसैस्तृप्तस्य जाङ्गलैः॥
शाखाश्रया यथान्यायं रोहिणीर्व्यधयेत्सिराः।
पित्तज्वरसमः पित्तात्स चाप्यस्य विधिर्हितः॥
तृष्णानिरोधादब्धातौ क्षीणे तेजः समुत्थितं।
स बाह्याभ्यन्तरं देहं देहदे मन्दचेतसः॥
संशुष्कगलताल्वोष्ठोजिह्वां निःकृष्य वेपते।
तत्रोपशमयेत्तेजस्तब्धातुञ्च विवर्द्धयेत्॥
पाययेत्काममम्भश्च शर्कराढ्यं पयोऽपिवा।
शीतमिक्षुरसं मन्थं वितरेच्चेरितं विधिं॥

अष्टजा पूर्व्वोक्तास्तस्य दाहोऽन्यः स्यात्सुदुस्तरः।
विधिः सद्योव्रणीयोक्तस्तस्य लक्षणमेव च॥
धातुक्षयोक्तो यो दाहस्तेन मूर्च्छा तृषान्वितः।
क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः॥
रक्तपित्तविधिस्तस्य हितः स्निग्धोऽनिलापहः।
क्षतजेनाश्नतश्चान्यः शोचतोवाप्यनेकधा॥
तेनान्तर्दह्यतेऽत्यर्थं तृष्णामूर्च्छाप्रलापवान्।
तमिष्टविषयोपेतं सुहृद्भिरपि संवृतं॥
क्षीरमांसरसाहारं विधिनोक्तेन साधयेत्।
मर्म्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः॥
सर्व्वएव च वर्ज्याःस्युः शीतगात्रेषु देहिषु।
एवं विधो भवेद्यस्तु मदिरामयपीडितः॥
प्रशान्तोपद्रवस्यापि शोधनं प्राप्तमाचरेत्।
सजीरकाण्यार्द्रकशृङ्गवेरसौवर्चलान्यर्द्धजलप्लुतानि।
मद्यानि हृद्यान्यथ गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णां॥
जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्ष्यां पिशितोपदंशां।
पिबेत्सुरां नैव लभेत रोगान्मनोमतिघ्नञ्च मदं न याति॥

---

॥ अष्टचत्वारिंशत्तमोऽध्यायः॥

अथातस्तृष्णाप्रतिषेधमध्यायं व्याख्यास्यामः॥
सततं यःपिबेद्वारि न तृप्तिमधिगच्छति।

पुनःकाङ्क्षति तोयञ्च तं तृष्णार्दितमादिशेत् ॥
भयश्रमाभ्यां बलसंक्षयाद्वा ऊर्ध्वं चितं पित्तविवर्द्धनैश्च।
क्षोभशोकश्रममद्यपानाद्रुक्षाम्लशुष्कोष्णकटूपयोगात्।
धातुक्षयाल्लङ्घनसूर्य्यतापात् पित्तञ्च वातश्च भृशं प्रवृद्धौ।
स्रोतांसि संदूषयतः समेतौ यान्यम्बुवाहीनि शरीरिणां हि।
स्रोतःस्वपांवाहिषु दूषितेषु जायेत तृष्णा प्रबला ततस्तु।
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्यामसमुद्भवा च।
स्यात्सप्तमी भक्तनिमित्तजा तु लिङ्गानि तासां शृणु चौषधानि॥
ताल्वोष्ठकण्ठास्यविशोषदाहाः सन्तापमोहभ्रमविप्रलापाः।
पूर्व्वाणि रूपाणि भवन्ति तासामुत्पत्तिकालेषु विशेषतोहि।
शुष्कास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरोगलेषु।
स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति।
मूर्च्छाप्रलापारुचिवक्त्रशोषाः पीतेक्षणत्वं प्रततश्च दाहः॥
शीताभिकाङ्क्षा मुखतिक्तताच पित्तात्मिकायां परिधूमनञ्च।
वाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णावलासेन भवेत्तु तत्र॥
निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रं।
शीतज्वरश्छर्दिररोचकश्च कफात्मिकायां त्वचि पाकएव॥
एतानि रूपाणि भवन्ति यस्यान्तयार्दितः काङ्क्षति नाति चाम्भः।
क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु॥
तयाभिभूतस्य निशादिनानि गच्छन्ति दुःखं पिवतोऽपितोयं।
रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु॥
पेपीयतेऽम्भः स सुखन्न याति तां सन्निपातादिति केचिदाहुः।

रुक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् ॥
त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादयुक्ता ।
स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्व्वन्नमेवाशु तृषां करोति ॥
क्षीणं विचित्तं वधिरं तृषार्त्तं विवर्ज्जयेन्निर्गतजिह्वमाशु ।
तृष्णाभिवृद्धावुदरे च पूर्व्वं तं वामयेन्मागधिकोदकेन ॥
विलेपनं चात्र हितं वदन्ति स्याद्दाडिमाम्रातकमातुलुङ्गैः ।
तृष्णा प्रयोगैरिह सा निवार्य्या शीतैश्च सम्यग्रसवीर्य्यजातैः ॥
गण्डूषमम्लैर्व्विरसे च वक्त्रे कुर्य्याच्च भैरामलकस्य चूर्णैः ।
सुवर्णरूप्यादिभिरग्नितप्तैर्लोष्टैः कृतं वा सिकतोपलैर्व्वा ॥
जलं सुखोष्णं शमयेत्तु तृष्णां सशर्करं क्षौद्रयुतं हिमं वा ।
पञ्चाङ्गिकाः पञ्चगणा य उक्तास्तेष्वम्बु सिद्धं प्रथमे गणे वा ॥
पिबेत्सुखोष्णं मनुजोऽल्पशस्तु तृषो विमुच्येत हि वातजायाः ।
पित्तघ्नवर्गेण कृतः कषायः सशर्करः क्षौद्रयुतः सुशीतः ॥
पीतस्तृषां पित्तकृतान्निहन्ति क्षीरं शृतं वाप्यथ जीवनीयैः ।
बिल्वाढकीकण्टकपञ्चमूलोदर्भेषु सिद्धं कफजान्निहन्ति ॥
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ।
सर्व्वासु तृष्णास्वथवापि पैत्तं कुर्य्याद्विधिस्तेन विना न शान्तिः ॥
पर्य्यागतोडुम्बरजो रसस्तु सशर्करस्तत्क्वथितोदकं वा ।
वंशस्य सिद्धस्य च शारिवादेः पातव्यमम्भः शिशिरं तृषार्त्तैः ।
कशेरुशृङ्गाटकपद्मलोचविशेषु सिद्धं क्षतजान्निहन्ति ॥
नीलोत्पलोशीरकुचन्दनानि दत्वा प्रवाते निशि वासयेत्तु ।

तदुत्तमं तोयमुदारगन्धि सितायुतं चौद्रयुतन्तथैव ।
द्राक्षाप्रगाढञ्च हिताय वैद्यः तृष्णार्द्दितेभ्यो वितरेन्नरेभ्यः ॥
कुमारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे च ।
कुर्य्यात्कषायञ्च यथैव युक्तं मधूकपुष्पादिषु वापरेषु॥
राजादनक्षीरिकपीतनेषु षट्पानकान्यत्र हितानि च स्युः ।
सतुण्डिकेरीण्यथवा पिबेत्तु पिष्टानि कार्पासफलमुद्भवानि ॥
चतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ।
चयोत्थितां क्षीरघृतं निहन्यान्मांसोदकं वा मधुकोदकं वा ॥
आमोद्भवां बिल्ववचायुतानां जयेत्कषायैरथ दीपनानां ।
आम्रातभल्लातबलायुतानि पिबेत्कषायाण्यथ दीपनानि ॥
गुर्वन्नजातां वमनैर्जयेच्च चयादृते सर्व्वकृतास्तु तृष्णाः ।
अस्रोद्भवां मांसरसो निहन्ति गुडोदकं वाप्यथवापि मन्थः ॥
भक्तोपरोधात्तृषितो यवागूमुष्णां पिबेन्मन्थमथो हिमं च ।
या स्नेहपीतस्य भवेच्च तृष्णा तत्रोष्णमम्भः प्रपिबेन्मनुष्यः ॥
मद्योद्भवामर्द्धजलं निहन्ति मद्यं तृषां चापि हि मद्यपस्य ।
उष्णोद्भवां हन्ति जलं सुशीतं सशर्करञ्चेक्षुरसं तथाम्भः ।
स्वैः स्वैः कषायैर्व्वमनानि तासां तथा ज्वरोक्तानि च पाचनानि ।
लेपावगाहौ परिषेचनानि कुर्य्यात्तथा शीतगृहाणि चापि॥
संशोधनं क्षीररसौ घृतानि सर्व्वासु लेहान्मधुरान् हिमांश्च ॥

---

॥ एकोनपञ्चाशत्तमोऽध्यायः ॥

अथातश्छर्दिप्रतिषेधमध्यायं व्याख्यास्यामः ॥

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि ।
अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनैः ॥
श्रमात् भयात्तथोद्वेगादजीर्णात्कृमिदोषतः ।
नार्य्याश्चापन्नसत्वायास्तथातिद्रुतमश्नतः ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ॥
निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः ।
दोषानुदीरयन् वृद्धानुदानो व्यानसङ्गतः ॥
ऊर्द्ध्वमागच्छति भृशं विरुद्धाहारसेविनां ।
हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ॥
द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणं ।

प्रच्छर्दयेत्फेनिलमल्पमल्पं शूलार्द्दितोऽभ्यर्द्दितपार्श्वपृष्ठः ।
श्रान्तः सघोषं बहुशः कषायं जीर्णेऽधिकं सानिलजा वमिस्तु ।
योऽम्लं भृशं वा कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद्वा ॥
सदाहचोषज्वरवक्त्रशोषमूर्च्छान्विता पित्तनिमित्तजा सा ।
यो हृष्टरोमा मधुरं प्रभूतं शुक्लं हिमं सान्द्रकफानुविद्धं ॥
अभक्तरुग्गौरवसादयुक्तो वमेद्वमी सा कफकोपजा स्यात् ।
सर्व्वाणि रूपाणि भवन्ति यस्यां सा सर्व्वदोषप्रभवा मता तु ॥
बीभत्सजा दौहृदजामजा च या सात्म्यतोवा क्रमिजा च या हि ।

या पञ्चमी ताश्च विभावयेत्तु दोषोच्छ्रयेणैव यथाक्रमादौ ॥
आमाशयोत्क्लेशभवाश्च सर्व्वास्तस्माद्धितं लङ्घनमेव तासु ।
शूलहृल्लासबहुला कृमिजाच विशेषतः ॥
कृमिहृद्रोगतुल्येन लक्षणेनच लक्षिता ।
क्षीणस्योपद्रवैर्युक्तां सास्रकृपूयां सचन्द्रिकां ॥
छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितुं ।
वमीषु बहुदोषासु च्छर्दनं हितमुच्यते ॥
विरेचनं वा कुर्वीत यथादोषोच्छ्रयं भिषक् ।
संसर्गांश्चानुपूर्व्वेण यथास्वभेषजाय तान् ॥
लघूनि परिशुष्काणि सात्म्यान्यन्नानि वाचरेत् ।
यथास्वञ्च कषायाणि ज्वरघ्नानि प्रयोजयेत् ॥
हन्यात्क्षीरघृतं पीतं छर्दिं पवनसम्भवां ।
मुद्गामलकयूषो वा सर्प्पिष्मः ससैन्धवः ॥
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिवेत् ।
पिवेद्वाव्यक्तसिधूत्यफलाम्लं वैष्किरं रसं ॥
सुखोष्णलवणं वाच हितं स्नेहविरेचनं ।
पित्तोपशमनीयानि पानानि शिशिराणिच ॥
कषायाण्युपयुक्तानि घ्नन्ति पित्तकृतां वमीं ।
शोधनं मधुरैश्चात्र द्राक्षारससमायुतैः ॥
बलवत्यां प्रशंसन्ति सर्प्पिस्तैल्वकमेवच ।
आरग्वधादिभिर्यूषं दशाङ्गयोगमेवच ॥

पाययेताथ सक्षौद्रं कफजायां चिकित्सकः ।
कृतङ्गुडूच्या विधिवत्कषायं हिमसंज्ञितं ॥
तिसृष्वपि भवेत्पथ्यं माक्षिकेण समन्वितं ।
वीभत्सजां हृद्यतमैर्हरेच्छर्दीं काङ्क्षितैः फलैः ॥
लङ्घनैर्वमनैश्चामां सात्म्यैश्चासात्म्यकोपजां ।
कृमिहृद्रोगवच्चापि कृमिजां साधयेदिमां ॥
वितरेच्च यथादोषं प्रशस्तं विधिमनन्तरं ।
दधित्थरससंयुक्तां पिप्पलीमाक्षिकान्वितां ॥
मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रतिमुच्यते ।
समाक्षिका मधुरसा पीता वा तण्डुलाम्बुना ॥
तर्प्पणं वा मधुयुतं तिसृणामपि भेषजं ।
क्षयजुप्तां सयष्ट्याह्वां तण्डुलाम्बुमधुद्रवां ॥
पिबेद्यवागूमथवा सिद्धां पत्रैः करञ्जजैः ।
युक्ताम्ललवणाः पिष्टाः कुस्तुम्बर्य्योऽथवा हिताः ॥
तण्डुलाम्बुयुतं खादेत्कपित्थं त्र्यूषणेन वा ।
सिताचन्दनमध्वाक्तं लिह्याद्वा मक्षिकाशकृत् ॥
पिबेत्पयोऽग्नितप्तञ्च निर्व्वाप्य गृहगोधिकां ।
सर्प्पिःक्षौद्रयुतान् वापि लाजसक्तून्पिबेत्तथा ॥
सर्प्पिःक्षौद्रसितोपेतां मागधीं वा लिहेत्तथा ।
धात्रीरसे चन्दनं वा घृतं मुद्गदलाम्बु वा ॥
कोलामलकमज्जानं लिह्याद्वा त्रिसुगन्धिकं ।

रुचौद्रं शालिलाजानां यवागूं वा पिबेन्नरः ॥
ग्रेयाण्युपहरेच्चापि मनोघ्राणसुखानिच ॥
जाङ्गलानिच मांसानि स्वादुवत्पानकानिच।
भोजनानि विचित्राणि कुर्य्यात्सर्व्वास्वतन्द्रितः ॥

---

॥ पञ्चाशत्तमोऽध्यायः ॥

अथातो हिक्काप्रतिषेधं व्याख्यास्यामः।
विदाहिगुरुविष्टम्भिरुचाभिष्यन्दिभोजनैः ॥
शीतपानाशनस्थानरजोधूमानिलानलैः।
व्यायामकर्म्मभाराध्ववेगाघातापतर्पणैः ॥
आमदोषाभिघातस्त्रीचयरोगप्रपीडनैः।
विषमाशनाध्यशनैस्तथा संशमनैरपि ॥
हिक्का श्वासश्च कासश्च नृणां समुपजायते।
मुहुर्मुहुर्व्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन्।
सघोषवानाशु हिनस्त्यसून् यतस्ततस्तु हिक्केति भिषग्भिरुच्यते ॥
अन्नजां यमलां चुद्रां गम्भीरां महतीं तथा।
कफेनानुगतो वायुः पञ्च हिक्काः करोति हि ॥
मुखं कषायमरतिर्गौरवं कण्ठवक्षसोः।
पूर्व्वरूपाणि हिक्कानामाटोपो जठरस्य च ॥
पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः।
हिक्कयत्यूर्द्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥

चिरेण यमलैर्व्वेगैर्या हिक्का संप्रवर्त्तते ।
कम्पयन्ती शिरोग्रीवं यमलान्तां विनिर्दिशेत् ॥
विकृष्टकालैर्या वेगैर्म्मन्दैः समभिवर्त्तते ।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्प्रधाविता ॥
नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी ।
शुष्कौष्ठकण्ठजिह्वास्यश्वासपार्श्वरुजाकरी ॥
अनेकोपद्रवयुता गम्भीरा नाम सा स्मृता ।
मर्म्माण्यापीडयन्तीव सततं या प्रवर्त्तते ॥
देहमायाम्य वेगेन घोषयत्यतितृष्यतः ।
महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी ॥

आयम्यते हिक्कतोऽङ्गानि यस्य दृष्टिश्चोर्द्ध्वं ताम्यते यस्य गाढं ।
क्षीणोऽन्नविट्कासते यश्च हिक्की तौ द्वावन्त्यौ वर्ज्जयेद्धिक्कमानौ ॥
प्राणायामोद्वेजनत्रासनानि सूचीतोदैः संभ्रमश्चात्र शस्तः ।
यष्ट्याह्वं वा माक्षिकेणावपीडः पिप्पल्यो वा शर्कराचूर्णयुक्ताः ॥
सर्पिः कोष्णं क्षीरमिक्षोरसो वा नातिक्षीणे स्रंसनं छर्द्दनञ्च ।
नारीपयःपिष्टमधुकचन्दनं घृतं सुखोष्णं च ससैन्धवं तथा ॥
चूर्णीकृतं सैन्धवमम्भसा तथा निहन्ति हिक्काञ्च हितञ्च नस्यतः ।
युञ्ज्याद्धूपं शालनिर्य्यासजातं नैपालं वा गोविषाणोद्भवं वा ॥
सर्पिःस्निग्धैः चर्म्मवालैः कृतं वा हिक्कास्थाने स्वेदनं वापि कार्य्यं ।
क्षौद्रोपेतं गैरिकं काञ्चनाह्वं लिह्याद्भस्म ग्राम्यसत्वास्थिजं वा ॥
तद्वच्छ्वाविन्मेषगोशल्यकानां रोमाण्यन्तर्धूमदग्धानि चात्र ।

मध्वाज्याक्तं बर्हिपत्रप्रसूतमेवं भस्मोडुम्बरं तैल्वकंवा ॥
खर्जिचारं बीजपुराद्रसेन चौद्रोपेतं हन्ति लीढ़ाशु हिक्कां।
सर्पिःस्निग्धाघ्नन्तिहिक्कां यवाग्वः कोष्णग्रासाःपायसो वा सुखोष्णः॥
शुण्ठीतोये साधितक्षीरमाजन्त्वदत्पीतं शर्करासंयुतंवा।
स्राटस्त्रवां सेव्यमानं निहन्याद्धात्वा हिक्कामाशु मूत्रं लजाव्योः॥
सपूतिकीटं लशुनोग्रगन्धाहिंस्रकमाचूर्णसुभावितन्तत्॥
चौद्रंसितां वारणकेशरञ्च पिवेद्रसेनेक्षुमधूकजेन।
पिवेत्पलं वा लवणोत्तमस्य द्वाभ्यां पलाभ्यां हविषः समग्रं॥
हरीतकीं कोष्णजलानुपानां पिवेद्धृतं चारमधुप्रपन्नं।
रसङ्कपित्थान्मधुपिप्पलीभ्यां पिचुप्रमाणं प्रपिवेत्सुखाय॥
कृष्णां सितां चामलकञ्च लीढं सशृङ्गवेरं मधुनाथवापि।
कोलास्थिमज्जाञ्जनलाजचूर्णं हिक्कां निहन्यान्मधुनाच लीढं॥

पाटलायाः फलं पुष्पं गैरिकं कटुरोहिणी।
खर्जूरमध्यं मागध्यः काशीशं मधुनामच॥
चत्वारोयूषयोगाः स्युः प्रतिपादप्रदर्शिताः।
मधुद्वितीयाः कर्त्तव्यास्ते हिक्कासु विजानता॥

कपोतपारावतलावशल्यकश्वदंष्ट्रगोधाद्विषदंशजान् रसान्।
पिवेत् फलाम्लानहिमान् ससैन्धवान्
स्निग्धांस्तथैवर्ष्यमृगद्विजोद्भवान्॥
विरेचनं पथ्यतमं ससैन्धवं घृतं सुखोष्णञ्च सितोपलायुतं।
सदागतावूर्द्धगतेऽनुवासनं वदन्ति केचिच्च हिताय हिक्किनां॥

॥ एकपञ्चाशत्तमोऽध्यायः ॥

अथातः श्वासप्रतिषेधं व्याख्यास्यामः ॥
यैरेव कारणैर्हिक्का बहुभिः सम्प्रवर्त्तते ।
तैरेव कारणैः श्वासो घोरो भवति देहिनां ॥
विहाय प्रकृतिं वायुः प्राणोऽथ कफसंयुतः ।
श्वासयत्यूर्द्ध्वगो भूत्वा तं श्वासं परिचक्षते ॥
क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्वश्च पञ्चधा ।
भिद्यते स महाव्याधिः श्वासएकोविशेषतः ॥
प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा ।
आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च ॥
किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते ।
निषण्णस्यैति शान्तिञ्च स क्षुद्र इतिसंज्ञितः ॥
हृट्खेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः ।
विशेषाद्दुर्द्दिने तान्यिच्छ्वासः स्यात्तमको मतः ॥
घोषेण महताविष्टः सकासः सकफो नरः ।
यः श्वसित्यबलोऽन्नद्विट् सुप्तस्तमकपीडितः ॥
स शाम्यति कफे हीने स्वपतश्च विवर्द्धते ।
मूर्च्छाज्वराभिभूतस्य ज्ञेयः प्रतमकस्तु सः ॥
आध्मातो दह्यमानेन वस्तिना सरुजं नरः ।
सर्व्वप्राणेन विच्छिन्नं श्वस्याच्छिन्नन्तमादिशेत् ॥
निःसंज्ञः पार्श्वशूलार्त्तः शुष्ककण्ठोऽतिघोषवान् ।

संरम्भनेत्रस्त्वायम्य यः श्वस्यात्स महान्स्मृतः ॥
मर्म्मस्वायम्यमानेषु श्वसन्मूढो मुहुश्च यः ।
ऊर्द्ध्वप्रेक्षी हृतरवस्तमूर्द्ध्वश्वासमादिशेत् ॥
क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ।
त्रयः श्वासा न सिध्यन्ति तमको दुर्ब्बलस्य च ॥
स्नेहवस्तिं विना केचिदूर्द्ध्वञ्चाधश्च शोधनं ।
मृदु प्राणवतां श्रेष्ठं श्वासिनामादिशन्ति हि ॥
कासे श्वासे च हिक्कायां हृद्रोगे चापि पूजितं ।
घृतं पुराणं संसिद्धमभयाविडरामठैः ॥
सौवर्च्चलाभयाविल्वैः संस्कृतं वा नवं घृतं ।
पिप्पल्यादिप्रतीवापं सिद्धं वा प्रथमे गणे ॥
सपञ्चलवणं सर्पिः श्वासकासौ व्यपोहति ।
हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ॥
द्विक्षीरं साधितं सर्पिश्चतुर्गुणजलान्वितं ।
कोलमात्रैः पिबेत्तद्धि श्वासकासौ व्यपोहति ॥
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ।
दशम्ले वृषकषाये वा पचेत्सर्प्पिश्चतुर्ग्गुणे ॥
तन्मूलं कुसुमावापशीतं क्षौद्रेण योजयेत् ।
शृङ्गीमधुरिकाभार्गीशुण्ठीतार्क्ष्यसिताम्बुदैः ॥
सहरिद्रैः सयष्ट्याह्वैः समैरावाप्य योगतः ।
घृतप्रस्थं पचेद्धीमान् शीततोये चतुर्गुणे ॥

श्वासङ्कासन्तथा हिक्कां सर्पिरेतन्नियच्छति।
सुवहाकालिकाभार्गीशुकाख्यानैचुलम्फलं॥
काकादनीं शृङ्गवेरं वर्षाभू द्वहतीद्वयं।
कोलमात्रैर्घृतप्रस्थं पचेदेभिर्जलाढ्‌कं॥
कटूष्णं पीतमेतद्धि श्वासामयविनाशनं।
सौवर्च्चलयवक्षारकटुकाव्योषचित्रकैः॥
वचाभयाविडङ्गैश्च साधितं श्वासशान्तये।
गोपवल्ल्युदके सिद्धं स्यादन्यद्द्विगुणे घृतं॥
तालीशतामलक्युग्राजीवन्तीकुष्ठसैन्धवैः।
विल्वपुष्करपूतीकसौवर्चलकणाग्निभिः॥
पथ्यातेजोवतीयुक्तैः सर्प्पिर्जलचतुर्गुणं।
हिङ्गुपादयुतं सिद्धं सर्व्वश्वासहरम्परं॥
पञ्चैतानि हवींष्याहुर्भिषजः श्वासकासयोः।
वासाघृतं षट्‌फलञ्च घृतं चात्र हितं भवेत्॥
तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे।
सेव्यमानं यथान्यायं श्वासकासौ व्यपोहति॥
फलाम्ला विष्किररसाः स्निग्धाः प्रव्यक्तसैन्धवाः।
एणादीनां शिरोभिर्व्वा कौलत्था वा सुसंस्कृताः॥
हन्युः श्वासञ्च कासञ्च संस्कृतानि पयांसि च।
तिनिशस्य च वीजानि कर्कटाख्या सुवर्चिका॥
दुरालभाथ पिप्पल्यः कटुकाख्या हरीतकी।

श्वाविन्मयूररोमाणि कोला मागधिका कणाः ॥
भार्गीलकुचशृङ्गवेरञ्च शर्कराञ्जनकाञ्जनं ।
त्रिकण्टकस्य वीजानि चूर्णितानि तु केवलं॥
पञ्चश्लोकार्द्धिकास्त्वेते लेहा ये सम्यगीरिताः ।
सर्प्पिर्मधुभ्यां ते लेह्याः कासश्वासार्दितैर्नरैः ॥
सप्तच्छदस्य पुष्पाणि पिप्पलीश्चापि मस्तुना ।
पिवेत्सच्चूर्ण्य मधुना धानाश्चाप्यथ भक्षयेत् ॥
अर्काङ्कुरैर्भावितानां यवानां साध्वनेकशः ।
तर्पणं वा पिवेदेषां सक्षौद्रं श्वासपीडितः ॥
शिरीषकदलीकुन्दपुष्पमागधिकायुतं ।
तण्डुलाम्बुयुतं पीत्वा जयेच्छ्वासानशेषतः ॥
कोलमज्जस्तालमूलम्टग्यचर्ममसीमपि ।
लिह्यात्क्षौद्रेण भार्गीं वा सर्पिर्मधुसमायुतां ॥
निम्बैः कदम्बवीजं वा सक्षौद्रं तण्डुलाम्बुना ।
द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभां ॥
सर्प्पिर्मधुभ्यां विलिहन्हन्ति श्वासान् सुदारुणान्।
हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीं ॥
लिह्यात्तैलेन तुल्यानि श्वासार्त्तो हितभोजनः ।
गवां पुरीषस्वरसं मधुमागधिकायुतं ॥
लेहः श्वासेषु कासेषु वाजिनां वा शकृद्रसः ।
पाण्डुरोगेषु शोथेषु ये योगाः सम्प्रकीर्त्तिताः ॥

श्वासकासापहास्तेऽपि कासघ्ना येच कीर्त्तिताः ।
भार्गीलकुच्यूषणं तैलं हरिद्रा कटुरोहिणीं ॥
पिप्पलीं मरिचं चण्डाङ्गीशक्रद्रुममेव च ।
तलकोटस्य वीजेषु पचेदुल्कारिकां शुभां ॥
सेव्यमाना निहन्त्येवा श्वासानाशु सुदुस्तरान् ।
पुराणसर्प्पिः पिप्पल्यः कौलत्था जाङ्गला रसाः ॥
सुरासौवीरकं हिङ्गु मातुलुङ्गरसो मधु ।
द्राचामलकविल्वानि शस्तानि श्वासहिक्किनां ॥
श्वासहिक्कापरिगतं स्निग्धैः स्वेदैरुपाचरेत् ।
युक्तैर्लवणतैलाभ्यां तैरस्य ग्रथितःकफः ॥
खस्थो विलयं याति मारुतश्चास्य शाम्यति ।
स्निग्धं ज्ञात्वा ततश्चैव भोजयित्वा रसौदनं ॥
वातश्लेष्मविबन्धो वा भिषग्धूमं प्रयोजयेत् ।
मनःशिलादेवदारुहरिद्राच्छदनामिषैः ॥
लाचोरुवूकमूलैश्च कृत्वा वर्त्तीर्व्विधानतः ।
सर्प्पिर्वमधूच्छिष्टशालनिर्य्यासजं तथा ॥
शृङ्गवालखुरस्नायुत्वक्समस्तं गवामपि ।
तुरष्कशल्लकीनाञ्च गुग्गुलोः पद्मकस्य च ॥
एते सर्व्वे ससर्पिष्का धूमाः कार्य्या विजानता ।
बलीयसि कफग्रस्ते वमनं सविरेचनं ॥
दुर्व्वले चैव रुचे च तर्प्पणं हितमुच्यते ।

जाङ्गलोरभ्रजैर्मांसैरानूपैर्वा सुसंस्कृतैः ॥
निदिग्धिकाद्यामलकप्रमाणां हिंग्वर्द्धयुक्तां मधुना सुयुक्तां ।
लिहन्नरः श्वासनिपीडितो हि श्वासं जयत्येव बलात्त्र्यहेण ॥
यथाग्निरिद्धः खलु काष्ठसङ्घैर्वज्रं यथा वा सुरराजमुक्तं ।
रोगास्तथैते खलु दुर्निवाराः श्वासस्य कासस्य विलम्बिका च ॥

---

## ॥ द्विपञ्चाशत्तमोऽध्यायः ॥

अथातः कासप्रतिषेधमध्यायं व्याख्यास्यामः ॥

उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः ।
कासस्यापि च ते ज्ञेयास्त एवोत्पत्तिहेतवः ॥

धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ।
विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव ॥
प्राणो ह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः ।
निरेति वक्त्रात्सहसा सदोषः कासः स विद्वद्भिरुदाहृतस्तु ॥
स वातपित्तप्रभवः कफाच्च क्षतात्तथान्यः क्षयजोऽपरश्च ॥
पञ्चप्रकारः कथितो भिषग्भिर्विवर्द्धितो यक्ष्मविकारकृत्स्यात् ॥
भविष्यतस्तस्य तु कण्ठकण्डूर्भोज्योपरोधो गलतालुलेपः ।
स्वशब्दवैषम्यमरोचकोऽग्निसादश्च लिङ्गानि भवन्त्यमूनि ॥
हृच्छङ्खमूर्द्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः ॥
प्रसक्तवेगश्च समीरणेन कासेत्तु शुष्कं स्वरभेदयुक्तः ।
उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्त्तः ॥

पित्तेन पीतानि वमेत्कटूनि कासेत्स पाण्डुः परिदह्यमानः ॥
विलिप्यमानेन मुखेन सीदन्शिरोरुगार्त्तः कफपूर्णदेहः ।
अभक्तरुग्गौरवसादयुक्तः कासेद्भृशं सान्द्रकफः कफेन ॥
वक्षोऽतिमात्रं विहतञ्च यस्य व्यायामभाराध्ययनाभिघातैः ।
विश्लिष्टवक्षाः स नरःसरक्तं ष्ठीवत्यभीक्ष्णं क्षतजःस उक्तः ॥

अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ।
रुक्षस्योरः क्षतं वायुर्गृहीत्वा कासमावहेत् ॥
सपूर्व्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितं ।
कण्ठेन रुजतात्यर्थं विभिन्नेनेव चोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥
पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीडितः ।
पारावतइवाकूजन् कासवेगात् क्षतोद्भवात् ॥
विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥
कुपिताःक्षयजं कासं कुर्य्युर्देहक्षयप्रदं ॥

स गात्रशूलज्वरदाहमोहान् प्राणक्षयञ्चापलभेत कासी ।
शुष्यन् विनिष्ठीवति दुर्व्वलस्तु प्रक्षीणमांसो रुधिरं सपूयं ॥
तं सर्व्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति ।
वृद्धत्वमासाद्य भवत्यथो वै याप्यन्तमाहुर्भिषजस्तु कासं ॥
शृङ्गीवचाकट्फलकत्तृणाब्दधान्याभयाभार्ग्यमराह्वविश्वं ।

उष्णाम्बुना हिङ्गुयुतं तु पीत्वा बद्धास्यमप्याशु जहाति कासं ॥
फलत्रिकव्योषविडङ्गशृङ्गीरास्नावचापद्मकदेवकाष्ठैः ।
लेहः समैः क्षौद्रसिताघृताक्तः कासं निहन्यादचिरादुदीर्णं ॥
पथ्यां सितामामलकानि लाजां समागधीं चापि विचूर्ण्य शुण्ठीं ।
सर्पिर्मधुभ्यां विलिहीत कासी ससैन्धवां वोष्णजलेन कृष्णां ॥
खादेद्गुडं नागरपिप्पलीभ्यां द्राक्षाञ्च सर्पिर्मधुनावलिह्यात् ।
द्राक्षां सितां मागधिकाञ्च तुल्यां सशृङ्गवेरं मधुकन्नुगाञ्च ॥
लिह्याद्घृतक्षौद्रयुतां समांशां सितोपलां वा मरिचांशयुक्तां ।
धात्रीकणाविश्वसितोपलाश्च संचूर्ण्य मण्डेन पिबेच्च दध्नः ।
हरेणुकां मागधिकाञ्च तुल्यां दध्ना पिबेत् कासगदाभिभूतः ॥
उभे हरिद्रे सुरदारुशुण्ठीं गायत्रिसारञ्च पिबेत्समांशं ।
वस्तस्य मूत्रेण सुखाम्बुना वा दन्तीं द्रवन्तीञ्च सतिल्वकांशां ॥
भृष्टानि सर्प्पिष्यथ वादराणि खादेत्पलांशानि ससैन्धवानि ।
कोलप्रमाणं प्रपिबेद्धि हिङ्गु सौवीरकेणाम्लरसेन वापि ॥
क्षौद्रेण लिह्यान्मरिचाणि वापि भार्गीवचाहिङ्गुकृताश्च वर्त्तिं ।
धूमे प्रशस्ता घृतसंप्रयुक्ता वेणुत्वगेलालवणैः कृता च ॥
मुस्तेङ्गुदीलङ्गमधुकाह्वमांसीमनःशिलालैश्छगलाम्बुपिष्टैः ।
विधाय वर्त्तीः सपयोनुपानं धूमं पिबेद्वातबलासकासी ॥
पिबेच्च सीधुं मरिचान्वितं वा तेनाशु कासं शममभ्युपैति ।
द्राक्षाम्बुमञ्जिष्ठपुराह्वयाभिः क्षीरं शृतं माक्षिकसंप्रयुक्तं ॥
निदिग्धिकानागरपिप्पलीभिः खादेच्च मुद्गान्मधुना सुसिद्धान् ।

उत्कारिकां सर्पिषि नागराढ्यां पक्कां समूलैस्त्रुटिकोलपत्रैः ॥
एभिर्निषेवेत क्षताच्च पेयां तन्वीं सुशीतां मधुना विमिश्रां ।
वल्लीकैः सर्पिर्विहितं षडङ्गं तद्वातकासं जयति प्रसह्य ॥
विदारिगन्धादिकृतं घृतं वा रसेन वा वासकजेन पक्कं ।
विरेचनं स्नैहिकमत्र चोक्तमास्थापनं चाप्यनुवासनञ्च ॥
धूमं पिबेत्स्नैहिकमप्रमत्तः पिबेत्सुखोष्णं घृतमेव चात्र ।
हिता यवाग्वश्च रसेषु सिद्धाः पयांसि लेहाः सघृतास्तथैव ॥
प्रच्छर्दनं कायशिरोविरिकास्तथैव धूमाः कवलग्रहाश्च ।
उष्णाश्च लेहाः कटुकानि हन्युः कफं विशेषेण विशोषणं वा ॥
कटुत्रिकञ्चापि वदन्ति पथ्यं घृतं क्रमिघ्नस्वरसे विपक्कं ॥
निर्गुण्डिपत्रस्वरसे च पक्कं सर्पिः कफोत्थं विनिहन्ति कासं ।
पाठाविडव्योषविडङ्गसिन्धुत्रिकण्टरास्नाऽऽतभुग्बलाभिः ॥
शृङ्गीवचाशोधरदेवदारुदुरालभाभार्ग्यभयाशठीभिः ।
सम्यग्विपक्कं द्विगुणेन सर्प्पिर्निदिग्धिकायाः स्वरसेन चैतत् ॥
श्वासाग्निसादस्वरभेदभिन्नान्निहन्त्युदीर्णानपि पञ्च कासान् ।
विदारिगन्धोत्पलसारिवादीन्निःक्वाथ्य वर्गान् मधुकञ्च क्षत्तं॥
घृतम्पचेदिक्षुरसाम्बुदुग्धैः काकोलिवर्गे च सशर्करं तत् ।
प्रातः पिबेत्पित्तकृते च कासे रतिप्रसूते क्षयजे च कासे ॥
खर्जूरभार्गीमगधाप्रियालमधूलिकैलामलकैस्समांशैः ।
चूर्णं सिताक्षौद्रघृतप्रगाढन्तौ निहन्ति कासानुपयुज्यमानं ॥
रक्तां हरिद्राञ्जनवह्निपाठामूर्व्वापकुल्या विलिहेत्समांशाः ।

क्षौद्रेण कासे क्षतजे क्षयोत्थे पिबेद्धृतं चेक्षुरसे विपक्वं ॥
चूर्णं पिबेच्चामलकस्य वापि क्षीरेण पक्वं सघृतं हिताशी ।
चूर्णानि गोधूमयवोद्भवानि काकोलिवर्गस्य कृतः सुसूक्ष्मः ।
कासेषु पेयस्त्रिषु कासवद्भिः क्षीरेण सक्षौद्रघृतेन वापि ॥
गुडोदकं वा क्वथितं पिबेद्धि क्षौद्रेण शीतं मरिचोपदंशं ।
प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्वार्द्धतुलां गुडस्य ॥
चूर्णीकृतैर्ग्रन्थिकचव्यजीरव्योषेभकृष्णाहपुषाजमोदैः ।
विडङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पिचुप्रमाणैः ॥
दत्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् ।
तद्भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तं ॥
अनेन सर्व्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोषाः ।
शाम्यन्ति चायं चिरमन्तरग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ॥
स्त्रीणाञ्च वन्ध्यामयनाशनः स्यात्कल्याणको नाम गुडः प्रतीतः ।
द्विपञ्चमूलेभकणात्मगुप्ताभार्गीशठीपुष्करमूलविश्वान् ॥
पाठामृताग्रन्थिकशङ्खपुष्पीरास्नाग्न्यपामार्गबलायवासान् ।
द्विपालिकांस्तस्य यवाढकञ्च हरीतकीनाञ्च शतं गुरूणां ॥
द्रोणे जलस्याढकसंयुते च क्वाथे कृते पूतचतुर्थभागे ।
पचेत्तुलां शुद्धगुडस्य दत्वा पृथक्च तैलात् कुडवं घृताच्च ॥
चूर्णं च तावन्मगधोद्भवाया देयञ्च तस्मिन्मधुसिद्धशीते ।
रसायनात्कल्कमतोविलिह्याद्द्वे चाभये नित्यमथाशु हन्यात् ॥
तद्राजयक्ष्मग्रहणीप्रदोषशोफाग्निमान्द्यस्वरभेदकासान् ।

पाण्ड्वामयश्वासशिरोविकारान् हृद्रोगहिक्काविषमज्वरांश्च ॥
मेधाबलोत्साहमतिप्रदश्च चकार चैतद्भगवान्वगस्त्यः ।
कुलीरशृङ्गीचटकैणलावान्निकाथ्य वर्गैर्मधुरैस्तथान्यैः ॥
पचेद्घृतं तत्तु निषेव्यमानं हन्यात् क्षतोत्थं क्षयजञ्च कासं ।
शतावरीनागबलाबलाभिर्घृतं विधेयञ्च हिताय कासिनां ॥

---

॥ त्रिपञ्चाशत्तमो ऽध्यायः ॥

अथातः स्वरभेदप्रतिषेधमध्यायं व्याख्यास्यामः ॥

अत्युच्चभाषणविषाध्ययनाभिघात
शीतादिभिः प्रकुपिताः पवनादयस्तु ।
ते शब्दवाहिधमनीषु गताः प्रतिष्ठां
हन्युः स्वरं भवति चापि हि षड्विधः सः ॥
वातेन कृष्णनयनाननमूत्रवर्चा भिन्नं शनैर्वदति गर्दभवत्खरञ्च ।
पित्तेन पीतवदनाक्षिपुरीषमूत्रो ब्रूयाद्गलेन च विदाहसमन्वितेन ॥
कृच्छ्रात्कफेन सततं कफरुद्धकण्ठो
मन्दं शनैर्वदति वापि दिवाविशेषात् ।
सर्व्वात्मके भवति सर्व्वविकारसंपदव्यक्तता च वचसस्तमसाध्यमाहुः॥
धूप्येत वाक्‌च यक्षते क्षयमाप्नुयाच्च
वागेष वापि हतवाक् परिवर्ज्जनीयः ।
अन्तर्गतस्वरमलव्यपदं चिरेण मेदोऽन्वयाद्वदति दिग्धगलौष्ठतालुः
क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यस्य सहोपजातः ।

मेदस्विनः सर्व्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति॥
स्निग्धान्स्वरातुरनरानपकृष्टदोषान्संयोजयेद्वमनरेचनवस्तिभिश्च।
नस्यावपीडमुखधावनधूमलेहैः सम्पादयेच्च विविधैः कवलग्रहैश्च॥

यः श्वासकासविधिरादित एव चोक्त
स्तञ्चाप्यशेषमवतारयितुं यतेत।
वैशेषिकञ्च विधिमूर्द्ध्वमतो वदामि
तद्वै स्वरातुरहितं निखिलं निबोध॥
स्वरोपघातेऽनिलजे भुक्तोपरि घृतं पिबेत्।
कासमर्दकवार्त्ताकमार्कवस्वरसैर्युतं॥
पीतं घृतं हन्त्यनिलं सिद्धमार्त्तगले रसे।
यवक्षाराजमोदाभ्यां चित्रकामलकेषु वा॥
देवदार्व्वग्निकाभ्यां वा सिद्धमाज्यं समाक्षिकं।
सुखोदकानुपानो वा ससर्प्पिष्को गुडौदनः॥
क्षीरानुपानं पित्ते तु पिबेत्सर्प्पिरतन्द्रितः।
अश्नीयाच्च ससर्प्पिष्कं यष्टीमधुकपायसं॥
लिह्यान्मधुरकाणां वा चूर्णं मधुघृताप्लुतं।
शतावरीचूर्णयोगं बलाचूर्णमथापि वा॥
पिबेत्कटूनि मूत्रेण कफजे स्वरसङ्क्षये।
लिह्याद्वा मधुतैलाभ्यां भुक्त्वा खादेत् कटूनि च॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते।
सर्व्वजे चापि चयजे प्रत्याख्यायाचरेत् क्रियां॥

शर्करामधुमिश्राणि शृतानि मधुरैःसह ।
पिबेत्पयांसि यश्चोच्चैर्वदतोऽभिहतः स्वरः ॥

---

॥ चतुःपञ्चाशत्तमोऽध्यायः ॥

अथातः क्रिमिरोगमध्यायं व्याख्यास्यामः ।
अजीर्णाध्यशनासात्म्यैर्विरुद्धमलिनाशनैः ॥
अव्यायामदिवास्वप्नगुर्व्वतिस्निग्धशीतलैः ।
माषपिष्टान्नविदलविसशालूककेसरुकैः ॥
पर्णशाकसुराशुक्तदधिक्षीरगुडेक्षुभिः ।
पललानूपपिशितपिण्याकपृथुकादिभिः ॥
स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तञ्च कुप्यति ।
क्रिमीन् बहुविधाकारान् करोति विविधाश्रयान् ॥
आमपक्वाशयस्तेषां प्रसवः प्रायशः स्मृतः ।
विंशतेः क्रिमिजातीनां त्रिविधः सम्भवः स्मृतः ।
पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणं ॥
अजवाविजवाः किप्याश्चिप्या गण्डूपदास्तथा ।
चूरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः ॥
श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च ।
तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि ॥
शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलसङ्क्षयाः ।
प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजैः ॥

रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः ।
शूलाटोपशकृद्भेदपक्तिनाशकराश्च ते ॥
दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटास्तथा ।
पिपीलिका दारुणाश्च कफकोपसमुद्भवाः ॥
रोमशा रोममूर्द्धानः सपुच्छाः श्यावमण्डलाः ।
रूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा ॥
मज्जादा नेत्रलेढारस्तालुश्रोत्रभुजस्तथा ।
शिरोहृद्रोगवमथुप्रतिश्यायकराश्च ते ॥
केशरोमनखादाश्च दन्तादाः किक्किशास्तथा ।
कुष्ठजाश्च परीसर्प्पा ज्ञेयाः शोणितसम्भवाः ॥
ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा ।
रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते ॥
माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ।
मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ।
ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः ॥
भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमिलक्षणं ।
दृश्यास्त्रयोदशाद्यास्तु क्रमीणां परिकीर्त्तिताः ॥
केशादाद्यास्त्वदृश्यास्ते द्वावाद्यौ परिवर्जयेत् ।
एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरं ॥
सुरसादिविपक्वेन सर्प्पिषा वान्तमादितः ।

विरेचयेत्तीक्ष्णतरैर्योगैरास्थापयेच्च तं ॥
यवकोलकुलत्थानां सुरसादेर्गणस्य च ।
विडङ्गस्नेहयुक्तेन काथेन लवणेन च ॥
प्रत्यागते निरूहे तु नरं स्नातं सुखाम्बुना ।
युञ्ज्यात् क्रमिघ्नैरशनैस्ततः शीघ्रं भिषग्वरः ॥
स्नेहेनोक्तेन चैनन्तु योजयेत्स्नेहवस्तिना ।
ततः शिरीषकिणिहीरसं चौद्रयुतं पिबेत् ।
केवूकस्वरसं वापि पूर्व्ववत्तीक्ष्णभोजनः ॥
पलाशवीजस्वरसं कल्कं वा तण्डुलाम्बुना ।
पारिभद्रकपत्राणां चौद्रेण स्वरसं पिबेत् ॥
पत्तूरस्वरसं वापि पिबेद्वा सुरसादिजं ।
लिह्यादश्वशकृच्चूर्णं विडङ्गं वा समाक्षिकं ॥
पत्रैर्मूषिकपर्ण्या वा सुपिष्टैः पिष्टमिश्रितैः ।
खादेत्पूपालिकान् पक्कान् धान्याम्लञ्च पिबेदनु ॥
सुरसादिगणे तैलं पक्कं वा पानमिष्यते ।
विडङ्गचूर्णपिष्टाभ्यां तस्मिन् भक्ष्यन्तु कारयेत् ॥
तत्कषायप्रपीतानां तिलानां स्नेहमेव वा ॥
श्वाविधः शकृतश्चूर्णं सप्तकृत्वः सुभावितं ।
विडङ्गानां कषायेण त्रैफलेन तथैव च ॥
चौद्रेण लिह्यानु पिबेद्रसमामलकोद्भवं ।
अचाभयारसञ्चापि विधिरेषोऽयसामपि ॥

पूतीकस्वरसं वापि पिबेद्वा मधुना सह।
पिबेद्वा पिप्पलीमूलमजामूत्रेण संयुतं ॥
सप्तरात्रं पिबेद्दृष्टन्तपु वा दधिमस्तुना।
पुरीषजान् कफोत्थांश्च हन्यादेवं कृमीन् भिषक्॥
शिरोहृद्घ्राणवक्त्राक्षिसंस्रृतांश्च पृथग्विधान्।
विशेषेणाञ्जनैर्नस्यैरवपीडैश्च साधयेत् ॥
शक्रद्रसन्तुरङ्गस्य सुशुष्कं भावयेदति।
निःक्वाथेन विडङ्गानां चूर्णं प्रधमनन्तु तत् ॥
अथचूर्णान्यनेनैव विधिना योजयेद्भिषक्।
सकांस्यनीलं तैलं च नस्यं स्यात्सुरसादिके ॥
इन्द्रलुप्तविधिश्चापि विधेयो रोमभोजिषु।
दन्तादानां समुद्दिष्टं विधानं मुखरोगिकं ॥
रक्तजानां समुद्दिष्टं कुर्य्यात्कुष्ठचिकित्सिते।
सुरसादिन्तु सर्व्वेषु सर्व्वथैवोपयोजयेत् ॥
अव्यक्ततिक्तकटुकं भोजनञ्च हितं भवेत्।
कुलत्थक्वाथसंसृष्टं चीरपानञ्च पूजितं ॥
क्षीराणि मांसानि घृतानिचैव दधीनि शाकानि च पर्णवन्ति।
समासतोऽम्लान्मधुरान् हिमांश्च कृमीन् जिघांसुः परिवर्जयेत्तु ॥

---

॥ पञ्चपञ्चाशत्तमोऽध्यायः ॥

अथात उदावर्त्तप्रतिषेधमध्यायं व्याख्यास्यामः ॥

अधश्चोर्द्धञ्च भावानां प्रवृत्तानां स्वभावतः।
न वेगान् धारयेत्प्राज्ञो वातादीनां जिजीविषुः॥
वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः।
व्याहन्यमानैरुदितैरुदावर्त्तो निरुच्यते॥
क्षुत्तृष्णाश्वासनिद्राणामुदावर्त्तो विधारणात्।
तस्याभिधास्ये व्यासेन लक्षणञ्च चिकित्सितं॥
त्रयोदशविधस्त्वासौ भिन्न एतैस्तु कारणैः।
अपथ्यभोजनाच्चापि वक्ष्यते च यथापरः॥

आध्मानशूलौ हृदयोपरोधं शिरोरुजं श्वासमतीव हिक्कां।
कासप्रतिश्यायगलग्रहांश्च बलासपित्तप्रसरञ्च घोरं॥
कुर्य्यादपानाभिहतः स्वमार्गे हन्यात्पुरीषं मुखतः क्षिपेद्वा।
आटोपशूलौ परिकर्त्तनञ्च सङ्गः पुरीषस्य तथोर्द्धवातः॥
पुरीषमास्यादपि वा निरेति पुरीषवेगेऽभिहते नरस्य।
मूत्रस्य वेगेऽभिहते नरस्तु कृच्छ्रेण मूत्रं कुरुतेऽल्पमल्पं॥
मेढ्रे गुदे वङ्क्षणमुष्कयोश्च नाभिप्रदेशेष्वथ वापि मूर्द्ध्नि।
आनद्धवस्तेश्च भवन्ति तीव्राः शूलाश्च शूलैरिव भिन्नमूर्त्तेः॥
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः।
श्रोत्राननघ्राणविलोचनोत्था भवन्ति तीव्राश्च तथा विकाराः॥
आनन्दजं शोकसमुद्भवं वा नेत्रोदकं प्राप्तममुञ्चतो हि।
शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन॥
भवन्ति गाढं क्षवथोर्व्विघाताच्छिरोऽक्षिनासाश्रवणेषु रोगाः।

कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथ वा प्रवृत्तिः ॥
उद्गारवेगेऽभिहते भवन्ति जन्तोर्व्विकाराः पवनप्रसूताः ।
छर्द्देर्व्विघातेन भवेच्च कुष्ठं येनैव दोषेण विदग्धमन्नं ॥
मूत्राशये वा गुदमुष्कयोश्च शोफो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरी तत्स्रवणं भवेद्वा ते ते विकारा विहते तु शुक्रे ॥
तन्द्राङ्गमर्दावरुचिः श्रमश्च क्षुधोऽभिघातात्कृशता च दृष्टेः ।
कण्ठास्यशोषः श्रवणावरोधस्तृष्णाभिघाताद्धृदये व्यथा च ॥
श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथवापि गुल्मः ।
जृम्भाङ्गमर्द्दोऽङ्गशिरोऽक्षिजाड्यं निद्राभिघातादथवापि तन्द्रा ॥

तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरभिद्रुतं ।
शकृद्वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत् ॥
सर्व्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः ।
वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये ॥
सामान्यतः पृथक्त्वेन क्रियां भूयो निबोध मे ।
आस्थापनं मारुतजे स्निग्धे स्विन्ने विशिष्यते ॥
पुरीषजे तु कर्त्तव्यो विधिरानाहिको भवेत् ।
सौवर्चलाढ्यां मदिरां मूत्रेऽभिहते पिबेत् ॥
एलामप्यथ मद्येन क्षीरं वापि पिबेन्नरः ।
धात्रीफलानां स्वरसं सजलं वा पिबेत्त्र्यहं ॥
रासभस्य पुरीषस्य गर्दभस्याथ वा पिबेत् ।
मांसोपदंशं मधु वा पिबेद्वा सीधु गौडिकं ॥

भद्रदारु घनं मूर्व्वां हरिद्रां मधुकं तथा ।
कोलप्रमाणानि पिबेदान्तरिक्षेण वारिणा ॥
दुष्पर्शाखरसं वापि कषायं कुङ्कुमस्य च ।
एर्व्वारुबीजं तोयेन पिबेद्वा लवणीकृतं ॥
पञ्चमूलीशृतं चीरं द्राक्षारसमथापि वा ।
योगांश्च वितरेत्तत्र पूर्व्वोक्तानश्मरीभिदः ॥
मूत्रकृच्छ्रक्रमं वापि कुर्य्यान्निरवशेषतः ।
भूयो वक्ष्यामि योगांश्च मूत्राघातोपशान्तये ॥
स्नेहस्वेदैरुदावर्त्तं जृम्भाजं समुपाचरेत् ।
अश्रुमोक्षोऽश्रुजे कार्य्यः स्निग्धस्विन्नस्य देहिनः ॥
तीक्ष्णाञ्जनावपीडाभ्यां तीक्ष्णगन्धोपसिंहनैः ।
वर्त्तिप्रयोगैरथ वा क्षवशक्तिं प्रवर्त्तयेत् ॥
तीक्ष्णौषधप्रधमनैरथवादित्यरश्मिभिः ।
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥
सुरां सौवर्च्चलवतीं बीजपूर्णरसान्वितां ।
छर्द्याघातं यथादोषं सम्यक् स्नेहादिभिर्जयेत् ॥
सक्षारलवणोपेतमभ्यङ्गं चात्र दापयेत् ।
वस्तिशुद्धिकरावापश्चतुर्गुणजलम्पयः ॥
आवारिनाशात्क्वथितं पीतवन्तं प्रकामतः ।
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरं ॥
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनं ।

तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलां ॥
भोज्यो रसेन विश्रान्तः श्रमश्वासातुरो नरः ।
निद्राघाते पिबेत् चीरं स्वप्याच्चेष्टकथारतः ॥
आध्मानोत्थेषु रोगेषु यथास्वं प्रयतेत हि ।
यच्च यस्मिन्भवेत्प्राप्तं तच्च तस्मिन् प्रयोजयेत् ॥
वायुः कोष्ठानुगो रुक्षैः कषायकटुतिक्तकैः ।
भोजनैः कुपितः सद्य उदावर्त्तं करोति हि ॥
वातमूत्रपुरीषासृक्कफमेदोवहानि वै ।
स्रोतांस्युदावर्त्तयति पुरीषं चातिवर्त्तयेत् ॥
ततो हृद्बस्तिशूलार्त्तो गौरवारुचिपीडितः ।
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥
श्वासकासप्रतिश्यायदाहमोहवमिज्वरान् ।
तृष्णाहिक्काशिरोरोगमनःश्रवणविभ्रमान् ॥
लभते च बहूनन्यान्विकारान्वातकोपजान् ।
तत्तैललवणाभ्यक्तं स्निग्धं स्विन्नं निरूहयेत् ॥
दोषतो भिन्नवर्चस्कं भुक्तं चाप्यनुवासयेत् ।
न चेच्छान्तिं प्रयात्येवमुदावर्त्तः सुदारुणः ॥
अथैनं बहुशः स्विन्नं युञ्ज्यात्स्नेहविरेचनैः ।
पाययेत तृट्प्रत्योलुयवानीरसवपानकैः ॥
हिङ्गुकुष्ठवचास्वर्ज्जिविडङ्गं वा द्विरुत्तरं ।
योगावेतावुदावर्त्तं शूलञ्चापि नियच्छतः ॥

